वादिभ्यः । विज्ञप्तिमात्रसत्यत्वे तु अवबोधव्यतिरेकेण कान्यार्थक्रिया,—इति स्वप्नद्विचन्द्रादीनामपि नासत्यता, नहि प्रतिभातमप्रतिभातं भवति,—इति न्यायात् । अवबोधान्तरजननमिति चेत्, तदपि तेषामस्ति, इति नासत्यता । वासनास्थैर्यानुबन्धेन प्राबन्धिकी स्थितिः,—इति चेत् तर्हि अनादिवासनानुबन्धित्वाद्विकल्पज्ञानप्रतिभासात्मनः प्रबन्धप्रवृत्तस्य द्वयस्यैव सत्यता न युष्मत्परिकल्पिताद्वयस्येति न विरुद्धत्वम् । ननु पूर्वापरपरामर्शात्मकत्वेनासंनिहितार्थभेदावभासाद्विकल्पानामसत्यार्थता,—इति चेत्, यदि असंनिहितोऽसत्यत्वात् कथं भासेत, भासते चेदद्वयवत् सत्य एव । बोधात्मकत्वमेव भवतां सत्त्वं, यतो न बाह्यार्थवादिनामिव ततोऽन्यदर्थक्रियाक्षमत्वमित्येवंप्रकारमत्रोच्यमानमसाधनं बाह्यार्थवादिनामेवास्य साधनत्वात् । ग्राह्यग्राहकयोः परनिष्ठत्वात् स्वरूपानवस्थितेरसत्यत्वमिति चेत्, कार्यकारणयोर्वा कथं सत्यत्वम्; तयोरपि नेति चेत्, तर्हि भावनाभ्यासादिहेत्वभावादद्वयविज्ञप्तिसन्ततेरपि देशकालप्रकृतिनियमायोगः,—इति सर्वमसमञ्जसम् । अथ परापेक्षा व्यवहार्यस्य विशिष्टस्यैव रूपस्य तयोरवस्थानाददोषः,—इति, तदितरत्रापि समानमिति नासत्यता, बाह्यार्थवादिभिरसत्यार्थत्वेन विकल्पस्याभ्युपगमादिति चेत्, अव्यभिचारी हेतुस्तदभ्युपगमस्य भवद्भिर्बाधितत्वात् । अत्राबाधनेऽपि

तत एवाद्वैतासिद्धिर्द्वयस्यैव तत्र प्रतिभासनाद्द्वयस्याभिधानमात्रमेवंरूपत्वाद्विकल्पस्य न तु प्रतिभासो येन सत्यताप्रसङ्गः,—इत्यभिनवशाक्याः। तदयुक्तम् मनोराज्याद्यवस्थासु ज्वलद्भासुरादेर्विकल्प्याकारस्याग्न्यादिविकल्पेष्वनुभवात्, न चानुभवमपह्नुत्य व्यवस्था व्यवस्थात्वमासादयति,—इत्युक्तम्। ग्राह्याकारावभासोऽसौ,—इति चेत् न, तस्य विकल्प्याकाराभेदात्, भेदे वा गच्छतस्तृणादिज्ञानाकाराणामिव विज्ञानाव्यतिरेकेण स्वसंवेद्यतया व्यवसायविषयत्वाभावात्। यदाहुः

'यैर्यन्निश्चीयते रूपं तत्तेषां विषयः कथम्।'

इति। ननु विकल्प्याकारस्यात्मत्वेनासत्यतया बाह्यत्वेन च व्यवस्थानुपपत्तेरसंभवः,—इति चेत्, यद्येवं व्यवस्थानुपपत्तिरेवास्तु नासंभवोऽनुभूयमानत्वात्, भवेत् वा काचिद्व्यवस्था,—इति तद्रूपतैव। यदुक्तं जरत्सौगतैः

'न विकल्पानुविद्धस्य स्पष्टार्थप्रतिभासिता।'

इति।

'विकल्पोऽवस्तुनिर्भासाद्विसंवादादुपप्लवः।
प्रत्यक्षाभः............................।'

इति च। ततो विकल्प्यस्यापि प्रतिभासनात् प्रतिभासमानतयैव सत्त्वाद्द्वयमेव सत्यमित्यद्वैतासिद्धिः। तर्हि निर्विकल्पे तत् सेत्स्यति, न तस्यापि तथैवोपलम्भात्,—

इत्युक्तम् । यदाहुः शब्दकणिकादौ विततमतयः

'अन्तस्तत्त्वबहिस्तत्त्वरूपं युगलकं तु तत् ।
प्रतिपत्ता भवेत्किंचित्किंचित्कश्चित्तु वस्तुतः ॥'

इति । ततश्च 'अविभागोऽपि बुद्ध्यात्मा ।' इत्येतदप्ययुक्तमेव । नन्वेवमपि ग्राह्यग्राहकात्मना द्वयरूपं विज्ञानमेव सिद्ध्यति न ग्राह्यस्यार्थता । यदाह

'नान्योऽनुभाव्यो बुद्ध्यास्ति तस्य नानुभवोऽपरः ।
ग्राह्यग्राहकवैधुर्यात्स्वयं सैव प्रकाशते ॥'

इति । न ज्ञानवैलक्षण्येनार्थतया विशिष्टार्थक्रियासाधनत्वेनार्थ्यमानतया च तस्य प्रतिभासनात्, तत्प्राप्तावेव चार्थक्रियासिद्धेस्तदप्राप्तौ तु अयथार्थत्वं शुक्तिकारजतादिज्ञानानामिति कथमर्थस्य नार्थता, तदनभ्युपगमे तु दानादेर्हिंसात्मनश्च धर्माधर्मात्मनः कर्मणोऽसिद्धेर्लौकायत एवोपास्यो भवताम् । ज्ञानाकारविषयत्वादेवमादेरदोषः, इति चेत्, तर्हि मनोराज्यादौ बहुतराण्यर्थाहरणदानादीनि शुभानि शत्रुवधादीनि च हिंसात्मकानि कर्माणि सिद्धानि स्युः,—इति को हि नाम बहुतरक्लेशसाध्येषु सेवाकृष्यादिषु गजतुरगशस्त्रादिषु साधनेषु प्रवर्तेत,—इत्यनुभवविरोधः । तान्यपि विशिष्टज्ञानप्रतिभासात्मकान्येवेति चेत् न, अर्थाभावेन तद्वैशिष्ट्यासिद्धेः न किंचिदेतत्, इतः परं परोपकारश्च धर्मो

जिनस्याप्येवं न संभवति परासंवेदनात् । सर्वज्ञत्वादस्य नैष दोषः, इति चेत्, स्वप्नादाविवास्यापि स्वाकारमात्रसंवेदनात् किंचिज्ज्ञतैवास्मिन् पक्षे न संभवति कुतः सर्वज्ञता । न, अधिगतिप्रत्ययबलेन सर्वस्य वेदनात्,– इति चेत्, कोऽयमधिगतिप्रत्ययो नाम सन्निहितमात्रतैव, संनिहितोऽत्रार्थो नवा, इति जात्यन्धेनेव कथं तेन गम्यते । न चैतदस्माभिः शक्यमवस्थापयितुम् । यदाहुः शाक्यप्रवराः 'भगवतां तु सर्वार्थप्रतिपत्तिः अचिन्त्या' इति । अत्यल्पमिदमुच्यते सर्वमचिन्त्यं हि अविदुषां विदुष एवात्राधिकारात् । आकारद्वारेण वेत्ति, इति चेत्, कोऽयं द्वारद्वारिभावस्तस्य स्वाकारमात्रवेदनतः स्वभावविप्रकृष्टेष्विवास्मदादीनामर्थेष्वनुत्पन्नप्रतिपत्तित्वात् । वस्तुतोऽर्थजन्यत्वात् तत्प्रतिभासस्य तस्य च यथार्थवेदनादस्ति द्वारद्वारिभावः,– इति चेत्, तर्हि अस्त्यर्थानुभवो न साक्षात् अपि तु एवमर्थानुमानेनेति चेत् न, तस्यापि ज्ञानत्वात् स्वाकारमात्रवेदनेन तद्विषयत्वानुपपत्तिः । तर्हि निर्मलत्वात् स्वज्ञानशक्त्यैव सर्वं बाह्यं वस्त्वसौ जानातीति चेत्, यद्येवमनिर्मलत्वादन्येषामसर्वार्थविषया तद्वदेव निराकारा सा भविष्यति इति नार्थाभावः । अस्तु वैभाषिकमतस्यैव मुख्यत्वात्,– इति चेत्, ततश्च

'नान्योऽनुभाव्यो बुद्ध्यास्ति' ।

इत्येतदयुक्तमिति शून्यवादनिरासः। ननु भवतामपि अर्थवेदनस्यात्मवेदनादभेदात् तस्य च प्रत्यर्थं भेदाभावादर्थानुभवो नोपपद्यते,–इति प्रोक्तनयेनैष प्रसङ्ग इत्युक्तं न सन्निहितार्थप्रकाशकत्वात्; सन्निहितार्थप्रकाशकत्वं हि आत्मनः स्वभावः प्रदीपादेरिव तथानुभवात् सिद्धः। तथा हि यो यः सन्निहितोऽर्थस्तं तं स्वशक्त्यैव प्रकाशयन्नयमनुभूयते,–इति कुतोऽर्थविशेषासिद्धेरेष प्रसङ्ग इति। ननु कथमेतदुपपद्यत इति तदयुक्तम्, नहि दृष्टेऽनुपपन्नं नाम, नहि 'अग्निर्दहति नाकाशम्' इत्यत्र तथा दर्शनादन्यदुपपत्तिकारणं शक्यं वक्तुम्। अथ कस्तस्य संनिहितेनार्थेनोपकारः कृतः, न कश्चित्, कथं तर्हि तमेव प्रकाशयति, तथा स्वभावत्वादित्युक्तम्, उपकारेऽपि तदस्वभावस्य प्रकाशकत्वादृष्टेः। ननु तदसंनिधौ तर्हि तदप्रकाशप्रकाशनात् स स्वभावोऽस्यास्ति,–इति कुतः तत्स्वरूपाभेदात्, स्वरूपं हि अस्यार्थप्रकाशात्मकत्वेनाविभिन्नरूपं सर्वदा विकल्पातीतं प्रकाशत इत्युक्तम्, तर्हि कथं न प्रकाशयत्यर्थम्, तस्यासन्निधानात्; संनिहितप्रकाशको हि कथमसन्निहितं प्रकाशयेत्, कस्तर्हि नीलप्रकाशात् पीतप्रकाशस्य भेदः, न कश्चित्, युगपत्प्रकाश इव तत्र हि तयोर्भेदे विशेषाभावात् तदवयवभेदेनापि भेदः,–इति प्रातिपरमाणु भेदतश्चित्रपटादिप्रतिभासाभावप्रसङ्गः। न च विकल्प-

घटितं तदिति वाच्यम्, उद्घाटितनेत्रस्य झटित्येव युगपत् तदवभासनात् तदानीं च विकल्पासंभवादसंवेदनाच्च । यदुक्तम्

'न चेमाः कल्पना असंविदिता एवोदयन्ते व्ययन्ते वा येन सत्योऽप्यनुपलक्षिताः स्युः ।'

इति । विकल्पज्ञानस्याप्येकत्वात् कथमनेकात्मकश्चित्रावभासः, तद्यथा तत्र नीलपीताद्यनेकप्रकाश्यभेदेऽपि अनुभूयमानस्यैकस्य ज्ञानात्मनो न भेदः, न च तदभेदात् तस्य नीलपीतादेरर्थभेदस्यासिद्धिः, एकस्यानेकप्रकाशनशक्तिसिद्धेर्भवद्भिरपीष्टत्वात्, तथा क्रमप्रकाशोऽपि अनुभवसिद्धस्यैकस्यैव प्रकाशात्मनोऽनेकप्रकाशनशक्तियोगात् क्रमव्यवस्थितानेकप्रकाशकत्वमनुभवसिद्धमेष्टव्यम् । न च तदभेदादर्थभेदासिद्धिदोषः, नहि दिक्क्रमावभासात् कालक्रमावभासस्य प्रकाशात्मनि कश्चित् भेदोऽनुभूयते इति । ननु दिक्क्रमप्रकाशे प्रकाशात्मनो भेदासंवेदनात् प्रदीपादेर्वर्तिदाहतैलक्षपणप्रकाशस्वज्ञानजननादिवदेकस्यानेककार्यकर्तृकत्वेन विरोधाभावात् शक्तीनां समुच्चयो न विरोधः, कालक्रमे तु प्रकाशशक्तीनां परस्पराभावरूपत्वेन घटपटादिशक्तीनामिव भेदाद्वस्तुभेदकत्वम् । यदाहुः

'शक्तिर्हि भावाभावाभ्यां भिद्यमाना वस्त्वपि भिनत्ति, न पुनः कार्यभेदेन ।'

इति । तदयुक्तमसिद्धत्वात्, नहि तत्रापि शक्तेर्भावाभावभेदोऽस्ति सर्वदैकरूपस्यैव प्रकाशात्मनोऽनारोपितरूपस्य संवेदनादित्युक्तम् । न च कार्याभावाच्छक्तेरभावः 'नावश्यं कारणानि तद्वन्ति भवन्ति ' इति न्यायात्; तदत्रापि वस्तुभेदासिद्धेः, तद्वत् शक्तीनां समुच्चय एव युक्तो न विरोधः, अपि च परोक्षस्य धर्मिणः कार्यभेदादिन्द्रियादेरिव शक्तिभेदतः स्वरूपभेदो न प्रत्यक्षसिद्धभेदस्य, तस्य हि प्रदीपादेरिवैकस्यानेककार्यकर्तृत्वेन भवद्भिरपीष्टत्वात् प्रत्यक्षासिद्धाभेदश्चात्मा,—इत्युक्तम् । अतो न तस्यापि शक्तिभेदाद्भेदः कल्पयितुं युक्त इति युगपत्प्रकाश इव न क्रमप्रकाशेऽप्यर्थभेदासिद्धिः । कथं तर्हि

'घटज्ञानमिति ज्ञानं घटज्ञानविलक्षणम् ।
घट इत्यपि यज्ज्ञानं विषयोपनिपाति तत् ॥' (वा० प० ३ । १०४)

इत्यादिलौकिकज्ञानभेदः, न ग्राहकात्मभेदात् तस्य सर्वदैकरूपभेदप्रकाशात्मतया संवेदनात् अपि तु अध्यवसायभेदात्, अध्यवसाय एव च ज्ञानं बुद्धिगुणत्वाज्ज्ञानस्य । यदुक्तम् 'बुद्धिरष्टगुणा स्मृता । लक्ष्यतेऽध्यवसायेन ।' इति, इति दर्शयिष्यामः । एवं 'बुद्ध्वा' इत्यपि प्रतिज्ञापदं व्याख्यातमिति ॥

ननु यद्यत्संवेद्यते तत्तत्संविद्रूपमेव यथा नीलादिसंवित्तिः, संवेद्यते च नीलादि; तस्मात् तदपि संविद्रूपमेवेत्यसंविदात्मनो बाह्यार्थस्यासंवेदनादर्थशून्यं सर्व-

मेव विज्ञानमिति प्रयोगान्तरेण शून्यवादिनः । यदाहुः

‘ संवेदनं हि तादात्म्यात्तद्वद्भासनमेव तत् ।
इदमेव किमुक्तं स्यात्स बाह्योऽर्थोऽनुभूयते ॥ ’

इति । अत आह

**प्रत्यक्षा बुद्धिरेवेति**
**निर्निबन्धनमुच्यते ॥ ६ ॥**
**बोधो बोधान्तरग्राह्यो**
**नेष्यते भवतापि यत् ।**

एतदप्ययुक्तं साधनधर्मासिद्धत्वाद्दृष्टान्तस्य, नहि तवापि नीलादिसंविदः संवेद्यत्वं सिद्धं क्षणिकत्वेन संविदन्तरोत्पत्तिकाले संभवाभावात्; न च दृष्टान्ते स्वसाध्यासिद्धसंबन्धो हेतुः साध्यं साधयितुं शक्नोत्यतिप्रसङ्गात् । अथैतद्दोषभयात् संविदः संविदन्तरजननेन वेद्यत्वमुच्यते । यदाहुः

‘ भिन्नकालं कथं ग्राह्यमिति चेत् ग्राह्यतां विदुः ।
हेतुत्वमेव युक्तिज्ञा ज्ञानाकारार्पणक्षमम् ॥ ’

इति ॥ ६ ॥

अत्राप्याह

**ग्राह्यत्वेऽपि न विज्ञानं**
**सर्वमेव निरर्थकम् ॥ ७ ॥**

यद्येवमनैकान्तिको हेतुः संविदः स्वतोऽसंविद्रूपाया अपि संवेद्यत्वात् तद्वदर्थस्यापि संवेद्यत्वं भविष्यति यतः ; अथ संविद्रूपत्वे सति संवेद्यत्वादिति हेतुस्तर्हि असिद्धः, नीलस्य संविद्रूपत्वेन संवेद्यत्वासिद्धेः,— इति सर्वमेव विज्ञानमर्थशून्यमिति नैष प्रतिज्ञार्थो भवतः सिद्ध्यतीति ॥ ७ ॥

अत्र पराभिप्रायं दर्शयति

**अथानुभवरूपत्वाद्**
**बोधः प्रत्यक्ष इष्यते।**

नात्र संविदन्तरसंवेद्यत्वं हेतुरपि तु स्वसंवेद्यत्वमेव, ततश्च न साधनधर्मासिद्धिरनैकान्तिकत्वं वा दोष इति ॥

एतदपि निराकरोति

**नाभावः संमुखीनेऽर्थे**
**ततोऽनुभवगोचरे ॥ ८ ॥**

यद्येवमसिद्धो हेतुः, नहि संवित्स्वभावत्वं नीलादेः संवेद्यस्य सिद्धमपि तु संवेद्यतैवेति, ततोऽसिद्धाद्धेतोरर्थे नीलादिके संवेद्यतयेदन्तानिर्दिश्यमाने प्रत्यक्षसिद्धे धर्मिणि नाभावो न बाह्यत्वनिरासः सिध्यतीति ॥ ८ ॥

एतदेव प्रत्यक्षसिद्धमित्याह

अयमेव हि विज्ञेयो
भेदो बोधार्थयोः स्फुटम् ।
पूर्वस्त्वनुभवाकार
उत्तरश्चानुभूयते ॥ ६ ॥

स्वपरप्रकाशरूपतया हि बोधात्मानुभवसिद्धस्तत्संवेद्यतयार्थोऽपीति नातः शून्यवादसिद्धिः । नन्वेवमात्मनोऽर्थस्य च द्वयोरनुभूयमानत्वे 'क आत्मा' इति न विद्मः, पशवोऽपि हि यावदात्मपरभावं प्रत्यसंमूढाः, सोऽयं पशोरपि पशुः कुदर्शनापस्मारगृहीतः शोच्य एव, कथं वा ज्ञानज्ञेययोः प्रकाशमानत्वे ज्ञानमेव भावानां शुद्धोऽर्थः । नन्वर्थ एवाहमर्थज्ञानयोराकारभेदानुपलम्भात् साधु समर्थितः सुगतनयो यदमेध्याकारोऽप्येवं विनेयविनेतृतयाभ्युपगतः ।

ननूक्तम्

'प्रभासुरमिदं चित्तं प्रकृत्यागन्तवो मलाः ।'

इति, तर्हि अयमेवात्मपरभाव इति नार्थज्ञानयोराकारभेदानुपलम्भः सिद्धोऽपि तु भिन्न एवोपलम्भः,—इति । एतेन सत्त्वद्रव्यकारकत्वादिभ्योऽचेतनानुमानमात्मनि प्रतिक्षिप्तं प्रत्यक्षनिराकृतत्वात् ॥ ६ ॥

पुनः प्रयोगान्तरेण शून्यवादिनः

वस्तु विज्ञानतो भिन्नं
नैव विज्ञानजन्मनः।
पूर्वत्राग्रह्यमाणत्वात्

यस्य येन सहोपलम्भो नियतस्तस्य ततो नार्थान्तरत्वं यथा द्विचन्द्रज्ञानप्रतिभासमानादेकस्माच्चन्द्रमसो द्वितीयस्य, नीलज्ञानेन सहोपलम्भनियमश्च नीलादेः, तेन विना ततः पूर्वापरयोः संवेदनाभावात् अतस्तस्यापि ततो नार्थान्तरत्वमिति नीलादेः संविद्रूपसिद्धितोऽर्थाद्ग्राह्यत्वनिरासः सिध्यति।

यदाहुः

'सहोपलम्भनियमादभेदो नीलतद्धियोः।'

इति॥

आचार्यस्तु 'नीलाभावेऽपि नीलप्रकाशकसद्भावस्य प्रतिपादितत्वादसिद्धमेतत् साधनम्, अथ बौद्धाध्यवसायापेक्षयोच्यते तत्राप्यसत्यर्थे मनोराज्याद्यवस्थासु तस्य भावादसिद्धतैव' इति मत्वा प्रमेयभेदेन तद्भेदमभ्युपगम्याप्याह

इत्यनैकान्तमुच्यते॥ १०॥

इत्येवमभ्युपगम्य तत्साधनमनैकान्तिकमुच्यत इत्यर्थः॥ १०॥

कथमित्याह

चक्षुर्व्यापारतः पूर्वं
प्रकाशाच्च न गृह्यते ।
रूपं लोके न तत्ताभ्या-
मभिन्नं संप्रतीयते ॥ ११ ॥

चक्षुःशब्देनात्रोपलम्भप्रस्तावाद्गोलकमेवैतदुच्यते, तस्य व्यापारो विस्फारावस्था तेनालोकेन च सहोपलम्भनियमो रूपस्य, न च चक्षुर्व्यापाररूपत्वमालोकरूपत्वं वा, इत्यनैकान्तिकता, बाह्यनिराकरणाय च भवद्भिरेष प्रयोगः समुपरचितः,—इति नालोकादेरपि विज्ञानरूपत्वादनैकान्तिकपरिहारो युक्तः, तस्यात एव साध्यत्वेनासिद्धत्वात् । नन्वनालोकस्यापि रूपस्य प्राण्यन्तरैरुलूकादिभिर्ग्रहणादालोकेन सहोपलम्भो नियतो नास्ति, इति नानैकान्तिकता, कथं तर्हि तमसा वृतं पटेनेव तेऽपि रूपं पश्यन्ति, न चावस्तुत्वं तमसो भूच्छायात्मकत्वेन बाह्यार्थवादिभिरभ्युपगमादस्मदादेरपि ततो दर्शनप्रतीघातसंभवाच्च । वस्तुत्वे च रूपावरणस्वभावं यावत् तदनिवृत्तं, तावत् कुतो रूपोपलब्धिः, तच्चक्षुःशक्त्यैव तेषां रूपं प्रकाशते इति चेत्, तर्हि सैवालोको रूपप्रकाशकत्वात् । अथाप्रकाशात्मिका भविष्यति इति चेत्, तर्हि कथं प्रकाशयति, नहि अप्रकाशात्मनः प्रकाशकत्वं तमस इवोपपद्यते,—इति प्रकाशात्मि-

कैव सा शक्तिरभ्युपगन्तव्या, ततः प्रकाशेन सहोपलम्भो नियत एव रूपस्य न च प्रकाशरूपतेत्यनैकान्तिकतैवास्य हेतोरिति । ननु चक्षुर्व्यापारमालोकं च विना रूपं योगिभिरुपलभ्यते,—इत्यत्र सहोपलम्भनियमाभावात् नानैकान्तिकविषयता । न, लोक इत्यत्र विशेषणात्; ततश्चास्मदादिप्रत्यक्षत्वे सत्येषां सहोपलम्भनियमोऽस्त्येव न चाभेदः,—इत्यनैकान्तिक एव ॥

किं च शून्यवादिनां चिरतरप्ररूढो विहारारामचैत्यादिभेदोऽनुभवसिद्धो नोपपद्यते, इत्याह

**नीलविज्ञानसन्तानः**
**पाण्डुरश्चेत्यनाकृतौ ।**
**आकारवति बोधेऽपि**
**नियमो नाविशेषतः ॥ १२ ॥**

नीलशुक्लादिसन्तानभेदोपलक्षितः सर्वोऽयं सरित्सागरपर्वतादिभेदो भिन्नार्थक्रियासाधनतया निश्चितो नाहेतुको देशकालप्रकृतिनियमयोगात् । यदाहुः

'नित्यं सत्त्वमसत्त्वं वा हेतोरन्यानपेक्षणात् ।
अपेक्षातो हि भावानां कादाचित्कत्वसंभवः ॥'

इति । नापि विज्ञानहेतुकस्तस्याकारवत्त्वेनाद्ययावत् जगत्यस्मिन्नसिद्धेः, आकारवति तस्मिन्नप्यभ्युपगम्यमाने

विज्ञानात्मनः सर्वत्र सर्वदा चाविशेषात् सर्वः सर्वाकारः सर्वत्र सर्वदा च स्यात्,—इति प्रागुक्तस्य जगद्वैचित्र्यनियमस्यासिद्धिप्रसङ्गः ॥ १२ ॥

तमेव प्रसङ्गार्थमाह

**एकाकारैव विज्ञप्तिः**

**प्राप्ता विज्ञानवादिनः ।**

यदाहुः

'तदतद्रूपिणो भावास्तदतद्रूपहेतुजाः ।'

इति । ततो यद्येनाभिन्नहेतुकं तत्तेनाभिन्नस्वभावं यथैकस्माद्द्वयाज्ज्ञानक्षणाद्द्वितीयं तद्रूपम्, यत्र त्वभिन्नरूपत्वं नास्ति तत्राभिन्नहेतुकत्वमपि नास्ति यथा सुगतनये ज्ञानयोः, अभिन्नहेतुकं च विज्ञानवादिनां पर्वताकाराद्विज्ञानात् सरित्समुद्रादिज्ञानमिति एकरूपमेव स्यादिति ॥

नन्वभिन्नहेतुकमपि बाह्यार्थवादिनां स्वप्ने पर्वतज्ञानात् सरित्समुद्रादिज्ञानं न चाभिन्नरूपामित्यनेकान्तः, अत्राह

**नीलादिभेदो बोधस्य**

**वस्त्वभावे तु किंकृतः ॥ १३ ॥**

नानेकान्तो, नहि बाह्यार्थवादिभिस्तेषां विज्ञानमात्र-

१ सरित्समुद्राद्याकारं ज्ञानम् इति पाठः ।

मेव हेतुरिष्यतेऽपि तु संस्कारद्वारेण यथायथं बाह्यान्यपि वस्तूनि, भवतस्तु बाह्यानां वस्तूनामभावाद्विज्ञानमात्रस्यैव सर्वत्र हेतुत्वमित्येष प्रसङ्ग उक्तः। न, अस्माभिरपि वासनाभ्युपगमात् तत्कृतोऽयं भेदावभासो न ज्ञानमात्रहेतुक इत्यप्रसङ्गः। तदुक्तम्

'ज्ञानजो ज्ञानहेतुश्च संस्कारो वासनोच्यते।'

इति ॥ १३ ॥

अत्राप्याह

**वासनाकृत इत्येतत्**
**पवनेरितभाषितम्।**

उन्मत्तप्रलपिततुल्यम् ॥

कुत इत्याह

**तत्क्षणज्ञानतो नान्या**
**वासना तव युज्यते ॥ १४ ॥**

सापि हि वासना न तावद्विज्ञानादन्या विज्ञानव्यतिरेकेणान्यस्य कस्यचिदिन्द्रियादेरपि भवद्भिरनभ्युपगमात्, अपि तु पूर्वस्माद्विज्ञानक्षणात्[१] जातं ज्ञानान्तरक्षणहेतुभूतं विशिष्टं ज्ञानमेव वासना, अतश्चाविशिष्टत्वेनोक्तमेव, अतो न किंचिदेतत्; अस्माकं तु स्थिर-

१ ख० पु० सर्वस्मादविज्ञानलक्षणात् ज्ञातम् इति पाठः।

त्वाद्बुद्धेर्वासनाधर्मान्तराण्यनेकान्यपि संभवन्ति,—इति शरीरावस्थाविशेषं धातुसाम्यवैषम्यादि वा सुखदुःखफलं कर्म वा यथार्थप्रदर्शकं देवताप्रसादं वा विशिष्टवासनापरिपाकहेतुमर्थान्तरमपेक्ष्य विशिष्टाकारत्वमुपपद्यते एव । ननु क्षणिकस्यापि ज्वालादेस्तृणपर्णादिहेतुजनिता पाण्डुत्वलौहित्यादिवासना दृश्यत एव । न, तत्स्वरूपत्वात्, स्वरूपं हि तत्तृणजन्यं विशिष्टमेवास्याः, विशिष्टमेव च पर्णादिजन्यं न त्वनवस्थितायाः काचित् वासनेति । यद्येवं, नीलज्ञानक्षणस्यापि प्राक्तनस्य कस्यचित् तत्स्वरूपं विशिष्टमेवास्तु येन विसदृशं पर्वताकारं रसाद्याकारं वा ज्ञानमनन्तं जनयिष्यति,—इत्यप्रसङ्गः । न, तस्य स्वसदृशक्षणजनकत्वेन धारावाहिकज्ञानेऽनभ्युपगमात् । ननु क्षणभेदादन्यदेव तन्नीलज्ञानमिति कार्यभेदः, तर्हि क्षणभेदाविशेषान्न कश्चित् सदृशं कार्यं जनयेत्—इत्येकसन्तानात्मनोऽस्य शरीराद्याकारस्यापि विज्ञानस्याभावप्रसङ्गात् सर्वव्यवहाराभावः, सन्तानमूलत्वाद्भवतां व्यवहारस्य । ननु कश्चित् नीलादिज्ञानक्षणः सदृशहेतुरपि भविष्यति । न, तर्हि क्षणभेदात् कार्यभेदः,—इति पूर्वः प्रसङ्गः । न, नीलज्ञानात्मनापि भेदात्, अन्यदेव तज्ज्ञानं सदृशस्य क्षणस्य हेतुरन्यदेव विसदृशस्य । कीदृशं कस्येति वाच्यम्, यादृशाद्यादृशं प्रतीयते तादृशं तस्येति प्रतीतिसमुत्पादवादिनः । तादिमे भृगुपतनस्थानश्वान इवोपास्थितोपस्थितस्य निमित्तं कल्पयन्तः कुतः किं भवतीति हेयोपादेयसाधनेष्वनुत्पन्नबुद्ध-

यः प्रेक्षावद्भिर्दूरतः परिहार्याः, तेषां हिताहितप्राप्तित्यागायैव तत्साधनजिज्ञासायां प्रवृत्तेः। ननु सन्तानविषयासौ भविष्यति। न, क्षणानां जननासम्भवेन तस्यासंभवात् क्षणप्रवाहात्मकत्वात् तस्येति सर्वानियमपरिहारायानुभूयमानो बाह्योऽर्थः सत्यः प्रकाशात्मनो भिन्नः प्रकाश्यस्वभावोऽभ्युपगन्तव्यः, तन्न सहोपलम्भमात्रेणास्यास्मादभेदः,—इति 'बोध्यम्' इत्यपि प्रतिज्ञापदं व्याख्यातमिति ॥ १४ ॥

किंच सहोपलम्भनियमादभेदेऽपि नात्माभावः, इत्याह

आत्मन्यसत्त्वं नो युक्त-
महंप्रत्ययगोचरे।

अहंप्रत्ययस्य स्थिरग्राहकपरामर्शरूपत्वेनात्मविषयत्वादस्त्येवाध्यवसेयेनात्मना सहोपलम्भनियमः,—इति द्वयोरपि संविद्रूपत्वसिद्धेः सत्यत्वमिति नैरात्म्याभावः। नन्वात्मनो विकल्पातीतत्वेनोक्तत्वात् मोक्षकारिकास्वाचार्येण बुद्धिबोध्यत्वनिरासाच्च अहंप्रत्ययगोचरत्वं बाह्यासिद्धमेव। सत्यम्, आत्मादिप्रत्ययवत्तु कथंचिददूरविप्रकर्षेण सोऽपि व्यवहारार्थं तद्विषयोऽभ्युपगम्यते, इति नासिद्धिः। ननु चाध्यवसायस्यावस्तुविषयत्वादस्माकमध्यवसायेन सहभावो न सिद्धः। युक्तमेतत् कदाचिद्बाह्यार्थवादिनो वक्तुं, भवतस्तु अबोधात्मनोऽसंवेद्यत्वादध्यवसेयस्यापि संवेद्यत्वेन बोधरूपतयाध्यवसायस्येव सत्त्वमिति

नासिद्धिस्तेन सहभावस्येति ; तर्हि वाद्यसिद्धोऽयमहंप्र-त्ययाभावेऽपि स्वसंवेदनेनात्मोपलम्भाभ्युपगमात् । सत्य-म्, अहमिति त्वध्यवसायेन सहभावोऽध्यवसेयतात्र हे-तुः सा च तदानीं नास्तीति तेन सहोपलम्भनियमो नासिद्धः, अन्या हि अध्यवसायपरामृश्यतान्या च सं-विद्रूपतेति बुद्धिसंवित्प्रविवेकप्रसङ्गेन प्रदर्शितं स्वायम्भु-वोद्द्योत एव । इह त्वनुपयोगान्नोच्यते, भवद्भिरप्युक्तम्

'अशक्यसमयो[1] ह्यात्मा चेतनानामनन्यभाक् ।
तेषामतः स्वसंवित्तिः नाभिजल्पानुषङ्गिणी ॥'

इति । अत एवोभय[2]भेदादस्य नात्र गृहीतग्राहित्वमपि तु तावन्मात्रेण प्रमाणत्वमिति दर्शयिष्यामः ॥

ननु 'गौरोऽहं कृशोऽहम्' इत्यनात्मनि शरीर एवाहं-प्रत्ययस्य दृष्टेर्विरुद्धो हेतुरित्यत आह

न चान्यस्मिन्नहंबुद्धिः
क्वचिद्दृष्टा तु निर्गुणा ॥ १५ ॥

न विशेषितत्वात्, गौरादिभिः पदार्थान्तरैर्विशेषितो हि अहंप्रत्ययो माणवकादौ सिंहादिप्रत्ययवद्गुणवृत्त्या शरीरे वर्तते, तैरविशेषितस्तु मुख्यतयात्मन्येव, स एव

---

१ ख० पु० मये ह्यात्मा इति पाठः ।
२ ख० पु० उपयोगभेदात् इति पाठः ।

चात्र हेतुरुक्तो न सविशेषणः, इत्यविरुद्ध एव ॥ १५ ॥

यद्येवं, प्रत्ययव्यतिरेकेणान्यस्य कस्यचिदात्मनः प्रत्येयस्यानुपलब्धेर्वनाद्येकत्वप्रत्ययवदहंप्रत्ययोऽपि निर्विषय एवेत्यसिद्धो हेतुः, अत्राप्याह

**कर्तृकर्मावभासाच्च**
**स्पष्टा दृष्टा क्वचिन्मतिः ।**
**अहमेतत्प्रपश्यामी-**
**त्यतः सिद्धं स्फुटं द्वयम् ॥ १६ ॥**

सत्यं, स्यात् निर्विषयो, यद्यात्मा सर्वार्थप्रकाशकतया स्वतो नावभासेत, स तु स्वसंवेदनेन विकल्पातीत एव सर्वदा भासत इत्युक्तम् । तद्विषयश्चायं प्रोक्तनयेनाहंप्रत्ययः क्वचित् 'अहमेतत् प्रपश्यामि' इत्यादौ परामर्शविशेषे स्पष्टः सुस्फुटानुभव एव दृष्टः,—इति न वनाद्येकत्वादिप्रत्ययवन्निर्विषयः, तन्नासिद्धिः प्रागुक्तस्य सहोपलम्भस्येति । यद्येवं, सहोपलम्भनियमादात्माद्वैतसिद्धिरितीष्टविघातः । न, त्वत्पक्षेऽप्यप्रतिक्षेप्यमेवात्मसंवेदनमित्येवंपरत्वादस्य, परमार्थतस्तु 'अत' इति 'अहमेतत् प्रपश्यामि' इति परामर्शबुद्धेरप्यस्याः सकाशादात्मा सर्वार्थप्रकाशकत्वेन सर्वदा परामर्शनीयः, अर्थस्तु तत्प्रकाश्यतया क्रमेण प्रतीयते, इत्यत्यन्ताभिन्नमध्यव-

सीयमानत्वात् स्फुटमेतद्द्वयं सिद्धमिति न भेदोऽप्ययुक्तः,–इति नेष्टविघातः। तदुक्तम्

'अयमेव हि विज्ञेयो भेदो बोधार्थयोः स्फुटम्।
पूर्वस्त्वनुभवाकार उत्तरश्चानुभूयते॥'

इति॥ १६॥

नन्वयं घट इत्यादेरद्वयविषयस्यापि विमर्शस्य दर्शनादत्रानैकान्तिकता, तदयुक्तमित्याह

सर्वमेव हि विज्ञानं
कर्तृकर्मावभासकम्।

अयं घट इत्याद्यपि विमर्शविज्ञानं न विमृश्यमात्रविषयमेव युक्तं स्वात्मनो विमर्शाभावेन परविमृश्यस्येव तद्रूपत्वासिद्धेः। स्वात्मनाप्यस्य तदानीं संवेदनात् नासिद्धिरिति चेत् न, संवेदनस्याप्यविमृष्टस्य गच्छतां तृणादिविषयस्येवासिद्धेः। यदाहुः

'संवित्तिरपरामर्शाद्विद्यमानापि वस्तुतः।
तृणादिवित्तिवद्यातुः सिद्धैवाविद्यमानवत्॥'

इति। तस्मादकर्तृक[1] एव तेनासौ विमर्शनीयः, आत्मकर्तृके च विषये विमृष्टे स्वात्मापि तदुपसर्जनीभूतो विमृष्ट एव सामर्थ्याद्भवति,–इति सर्वमेव विमर्शज्ञानं

१ ख० ग० आत्मकर्तृक इति पाठः।

कर्तृकर्मद्वयविषयमेवेति नानैकान्तिकता ॥

अनुमानेनाप्येतत् सिद्धमित्याह

**अयं संस्मर्यते यस्मात्**
**तदहं दृष्टवानिति ॥ १७ ॥**

अयं घट इत्यादिविमर्शविषया विस्मृतिर्भवन्ती कर्तृ-कर्मकरणविषया दृष्टेति कर्मकरणयोरिव पूर्वं कर्तुरपि अ-शब्दं विमर्शं गमयत्येवेति सर्वो विमर्शो द्वयविषय एवे-ति । अत एव नावस्तुविषयो विमर्शः प्रत्यक्षवद्वस्त्वन्व-यव्यतिरेकानुविधानात् । अन्यैरप्युक्तम्

'अस्ति ह्यालोचनं ज्ञानं प्रथमं निर्विकल्पकम् ।
बालमूकादिविज्ञानसदृशं शुद्धवस्तुजम् ॥
ततः परं पुनर्वस्तुधर्मैर्जात्यादिभिर्यया ।
बुद्ध्यावसीयते सापि प्रत्यक्षत्वेन संमता ॥'

इति । नन्वसत्यपि वस्तुनि घटादिविमर्शो मनोराज्यादौ दृष्टः । सत्यम्, अत एव तयोर्वस्त्ववस्तुविषयत्वात् प्रत्य-क्षतदाभासयोरिव भेदः । ननु वस्तुविषयत्वेनाभिमतस्या-पि 'स एवायं घटः' इत्येवमादेः पूर्वदृष्टतया विमर्शस्य प्र-वृत्तेः, अधुना च पूर्वदर्शनाभावेन तदसंभवादवस्तुविष-यत्वम् । न, प्राग्दर्शनाभावासिद्धेः, आत्मप्रकाश एवार्थ-दर्शनं तच्च सर्वदास्ति,—इत्युक्तम्; अतः प्राग्दृष्टतापि इ-दानीं तत्र वस्त्वेवेति नावस्तुविषयः, न घटादौ क्षणिक-

त्वस्यासिद्धेरिति वक्ष्यामः । एवं तर्हि सन्तमसे स्पृशतोऽपि 'अयं घटः' इत्यदृष्टानां रूपादीनामवमर्शादवस्तुविषयो मानस एष सार्तो[1] विकल्पः,—इति । न, तेषामेकसामग्रीप्रतिबद्धत्वेन विशिष्टात् स्पर्शलक्षणाल्लिङ्गादप्रत्यक्षाणामपि तदानीमनुमानात् । यदुक्तं भवद्भिरपि

'एकसामग्र्यधीनस्य रूपादेरसतो गतिः ।
हेतुधर्मानुमानेन धूमेन्धनविकारवत् ॥'

इति । न चानुमानविमर्शोऽपि अवस्तुविषयो वस्त्वन्वयव्यतिरेकानुविधानेन प्रमाणत्वात् प्रत्यक्षतद्विमर्शवत् । तदुक्तं भवद्भिरपि

'अर्थस्यासंभवेऽभावात्प्रत्यक्षेऽपि प्रमाणता ।
प्रतिबद्धस्वभावस्य तद्धेतुत्वे समं द्वयम् ॥'

इति । नापि अस्फुटावभासत्वेनास्यावस्तुविषयत्वं प्रत्यक्षस्याप्यर्थदूरवर्तिनस्तत्सम्भवतोऽनैकान्तिकत्वात्; आगमोत्थोऽपि विमर्शस्तदागमप्रणेतृज्ञानद्वारेण वस्तुनि प्रतिबद्धत्वादवञ्चकपित्रादिवाक्यश्रुतिजनितविमर्शवद्यथार्थ एव । तदुक्तं भवद्भिरपि

'इष्टोऽयमर्थः शक्येत ज्ञातुं सोऽतिशयो यदि ।'

इति । प्रत्यक्षानुमानागमबहिष्कृतस्तु विमर्शो मनोराज्यादिविमर्शवद्वस्तुप्रतिबन्धाभावादवस्तुविषयोऽस्तु । 'अहमे-

---

१ क० ग० पु० सान्तो विकल्प इति पाठः ।

तत् प्रपश्यामि' इति तु विमर्शः संविदितात्मार्थविषयत्वात् नावस्तुविषयः, किंतु प्रोक्तनयेन प्रत्यक्षविशेषत्वात् प्रमाणमेवेत्यतोऽप्यात्मसिद्धिः। ततश्च 'बोधेन' इत्येतदपि प्रतिज्ञापदं व्याख्यातमिति ॥ १७ ॥

तदेवमात्मनि साधकबाधकप्रमाणसदसत्त्वाभ्यां सद्व्यवहाराभावे निरस्तेऽपि लौकायतिकाः प्राहुः—अस्त्वेवं शरीरादिव्यतिरिक्तः सर्वार्थसाक्षितया स्वसंवेद्योऽहंप्रत्ययप्रत्येयत्वेन चाभिन्नरूप एवात्मा, स तु प्रयाणकाले विनश्यति उत्पत्तिमत्त्वाद्घटादिवदस्थिर एव, न चायमसिद्धो हेतुः शुक्रशोणितादिपरिणामविशेषभावे चैतन्यात्मनस्तस्योत्पत्तिदृष्टेस्तदभावे चादृष्टेर्वह्नाविव धूमस्य कार्यत्वं सिद्धं यतः, तदिदमुक्तम् 'चैतन्यपरिपूर्णो हि कायो जायते' इति। एतत् प्रतिक्षिपति

स्थिरत्वं चापि पुंसोऽत्र
स्मरणादेव गम्यते।

स्थिरत्वं जन्मनः प्रागपि सत्ता, शुक्रशोणितादिपरिणामविशेषादुत्पत्त्यभावः पुंसो जन्मसमनन्तरं स्मरणाद्धेतोः प्रतीयते ॥

तत्र तावद्धेतोरस्य व्याप्तिं साधयति

यतोऽन्येनानुभूतेऽर्थे
तदन्यस्य न जायते ॥ १८ ॥

स्मरणं हि विशिष्टैकाधिकरणानुभवपूर्वकं स्वात्मनि बाल्यावस्थात उत्तरकालं निश्चितमेव, यतः पटीयसोऽनुभवाद्देवदत्ताद्याश्रयान्तरगतादाश्रयान्तरे यज्ञदत्तादौ[1] स्मरणं न दृश्यते,– इति स्मरणस्य विशिष्टैकाधिकरणानुभवपूर्वकत्वेन व्याप्तिसिद्धिः ॥ १८ ॥

पक्षधर्मत्वमप्याह

हर्षादि लक्ष्यते येन
तज्जाते यौवनस्थवत् ।
अर्थानुभवसंस्कार-
तद्व्यक्तिस्मृतिपूर्वकम् ॥ १९ ॥

जाते लब्धशरीरजन्मनि पुरुषे जन्मनोऽनन्तरं मुखविकासाद्यन्यथानुपपत्त्या येन कारणेन हर्षादि तावल्लक्ष्यते, आदिग्रहणात् स्थानकरणाभिघातादि ।
यदाहुः

'आद्यः करणविन्यासः प्राणस्योर्ध्वं समीरणम् ।
स्थानानामभिघातैश्च[2] न विना पूर्वचेतनाम् ॥'

इति । तच्च नोन्मत्त इव वातादिक्षोभजनितं तत्र तदनावृतेऽपि तदानीं सर्वस्मिन्ननुभवात्, अपि तु यौवनादिस्थे पुरुष इव तदर्थस्याभ्यर्थ्यमानस्य सुखादेस्तत्साधनस्य वा

1 क० ग० पु० देवदत्तादौ स्मरणं नेति पाठः ।
2 ग० पु० वाताश्चेति पाठः ।

यो योऽनुभवस्तेनाहितो यो बुद्धौ संस्कारस्तस्य प्रबोधाद्यत् स्मरणं तत् तत्कारणकं लोके लक्ष्यते,—इति यत्र हर्षादि तत्रावश्यं तथाभूतस्मरणमित्यतोऽनुमितानुमानेनास्य पक्षधर्मसिद्धिरित्युक्तं भवति ॥ १९ ॥

ननु सुखाद्यनुभवपूर्वकमपि यौवनाद्यवस्थावति पुरुषे हर्षादि दृश्यते,—इति तत्स्मरणासिद्धावनैकान्तिकमित्याह

**न चाप्यनुभवस्तस्य**
**लक्ष्यतेऽनुभवे यतः।**

यस्मादनुभवविषये तस्य पुंसः सुखाद्यनुभवस्तदानीं सुखसाधनक्षीरपानाद्यभावद्वारेण न लक्ष्यते नास्तीति निश्चीयते। ततः सुखाद्यनुभवाभावे सति इति विशेषितं हर्षादि हेतुत्वेन प्रयुज्यमानमव्यभिचाराविशिष्टं सुखादिस्मरणं गमयति,—इति नानैकान्तिकम् ॥

ततः किमित्याह

**भवान्तरमतिक्रान्त-**
**मतः पुंसोऽनुमीयते ॥ २० ॥**

अतो हर्षादिलिङ्गविशिष्टस्मरणाद्विशिष्टैकाधिकरणानुभवपूर्वकत्वेन सिद्धव्याप्तिकाज्जातस्य पुंसो भवान्तरमतिक्रान्तमनुमीयते। न तु शरीरेण सह जन्म इति, यावपि श्रु-

क्शोणितकार्यत्वेऽस्य तद्भावभावतदभावाभावौ तावपि स्वतः प्रागभावप्रध्वंसाभावासंवेदनात् परचैतन्यस्य च परेण प्रत्यक्षीकर्तुमशक्यत्वान्न संभवत इति । यथा च स्थानकरणादीनामप्यत्र गमकत्वं तथा दर्शितमाचार्येण रौरववृत्तौ परमोक्षनिरासकारिकाभिः

'जन्मान्तरानुभूतेऽर्थे स्मृतिर्जातेऽपि दृश्यते ।
अशनाय भवेत्सा च स्तन्यं प्रत्युपसर्पणात् ॥'

इति तत एवावधार्यम् ॥ २० ॥

एवं चानादिका तस्य
योक्तव्या जन्ममालिका ।

एवमनेन क्रमेणानादिर्जन्मप्रबन्धः पुंसः साध्यः ॥

ततश्च

अनादिधर्मयोगित्वा-
दविनाश्यादिसंभवः ॥ २१ ॥

उत्पत्तिमत्त्वाद्धि घटादिवदनित्यत्वमस्योक्तं भवद्भिः, तच्चानादित्वान्न संभवति,— इत्यविनश्वरोऽप्यात्मा,— इति सिद्धम् ॥ २१ ॥

ननु चानादेरप्यस्य मोक्षे परमात्मलयादिव प्रदीपनिर्वाणवादिनामिव जीवात्मवादिनां विनाशो भविष्यति,— इत्याह

शुद्धे प्रमुक्तविज्ञाने
सर्वोपप्लवहानितः ।

नास्माकमात्मनाशो मोक्षोऽपितु सर्वबन्धनिवृत्तिः सर्वज्ञत्वाभिव्यक्तिश्चेति वक्ष्यामः ।

तदेवं 'प्रवृत्तिफलभोक्ता च' इति प्रतिज्ञापदमामुत्रिकफलविषयतया व्याख्यातम्, अधुनैहिकफलविषयतया दर्शयितुं 'क्षणिको ग्राहकात्मा' इति शाक्यपक्षो न केवलं प्राक्प्रदर्शितबाधकप्रमाणसद्भावादयुक्तो, यावत् साधकप्रमाणाभावादपीत्याह

क्षणिकत्वस्य नो मानं
भेदादर्शनतोऽस्ति हि ॥ २२ ॥

तथा हि 'अश्रावणः शब्दः' इतिवदयं पक्षः प्रत्यक्षनिराकृतो भेदादर्शनात् स्वसंवेदनप्रत्यक्षेणानारोपितस्य तदभेदस्य प्रोक्तनयेन प्रकाशनादित्यर्थः । किं च 'न सन्ति प्रमाणानि प्रमेयार्थानि' इतिवत् स्ववचननिराकृतः प्रमाणाभाव इवैतस्य क्षणिकत्वेऽस्य प्रतिज्ञावचनस्यानुपपत्तेः, पौर्वापर्यरहितो हि कालः क्षण इति भवतामभ्युपगमः, अनेकक्षणनिर्वर्त्यं चैतद्वचनं कथं क्षणो निर्वर्तयेदिति विरोधः । सत्यम् अत एवास्माभिः पक्षप्रयोगो नेष्यते त्रिरूपादेव लिङ्गात् साध्यसिद्धेः, तदपि त-

हि अत्र लिङ्गमुच्यताम् । ननु यत् सत् तत् सर्वं क्षणिकं, क्षणिकत्वाभावे सत्त्वाभावः, सन् च ग्राहकात्मा,—इति सत्त्वाख्यमेव । यद्येवं विरुद्धोऽयं हेतुः सत्त्वस्याक्षणिकत्वेन सर्वत्र घटादौ दृष्टान्ते व्याप्तिसिद्धेः । ननु विद्युज्ज्वालादिरत्र दृष्टान्तो । न, तस्याप्यसदादिगोचरत्वेनानेकक्षणरूपत्वात् । असर्वदृशां क्षणविषयव्यवहारस्य भवद्भिरप्यनभ्युपगमात् क्षणरूपत्वेनानैकान्तिक[1] एव । ननु शुद्धं सत्त्वमत्र हेतुः, यद्येवमसिद्धः नहि सत्त्वमात्रमक्षणिकत्वरहितं क्वचिद्धर्म्यन्तरेऽपि सिद्धम् । ननु विजातीयव्यावृत्तिद्वारेण प्रतिनियतभागाभिनिवेशित्वाद्विकल्पानां घटादावपि 'लोहितो मृण्मयः परिवर्तुलः' इत्यादिविकल्पान्तरविषयलौहित्यादिपरिहारेण सत्त्वविकल्पः प्रवर्तमानः सत्त्वं शुद्धमेव विषयीकरोति,—इति कथमसिद्धः[2] । यदुक्तम्

'यावन्तोंऽशसमारोपास्तन्निरासेन निश्चयाः ।
तावन्त एव शब्दाश्च तेन ते भिन्नगोचराः ॥'

इति । युक्तमेतद्धर्मान्तरविषयं न तु अक्षणिकविषयं तेन विना विकल्पत्वानुपपत्तेः, सर्वो हि विकल्पः प्राग्दृष्टतया 'स एवायम्' इति प्रवर्तमानो विकल्पतामासादयति । योजना कल्पनेत्ययोजकत्वेन निर्विकल्पत्वप्रसङ्गात्, योज-

१ ख० ग० पु० क्षणरूपत्वे इति सप्तम्यन्तः पाठः ।
२ ख० ग० पु० प्रथमसिद्ध इति पाठः ।

नैव चार्थ इवात्मन्यप्यक्षणिकतानिश्चयः । नहि आत्मन्यपि क्षणिकत्वे सति विशिष्टशब्दवाच्यतया 'अयं घटः' इत्यपि योजनोपपद्यते ।

यदुक्तम्

'तद्दृष्टावेव दृष्टेषु संवित्सामर्थ्यभाविनः ।
स्मरणादभिलाषेण व्यवहारः प्रवर्तते ॥'

इति । तद् योजनात्मकत्वाद् योजयितव्यार्थवत् आत्मापि योजकत्वेन तदुपसर्जनीभूतोऽक्षणिकतया निश्चित एव सर्वेण विकल्पेन भवति,–इति न धर्मान्तरं लौहित्यादिकमिव सत्त्वविकल्पेनाक्षणिकत्वमपि परिहर्तुं शक्यमिति शुद्धः सत्त्वाख्यो हेतुरसिद्ध एवेति । यदि शुद्धोऽयं हेतुस्ततो नित्यानित्ययोरेकेनान्वितत्वाद्वस्तुधर्मत्वेनोभयबहिर्भावायोगाच्च शब्दानित्यत्वादौ श्रावणत्वादिवदसाधारणानैकान्तिकः । यथादृष्टान्वितस्तु न शुद्धोऽतश्च विरुद्धः, इत्युक्तम् । सर्वस्य च सतः क्षणिकत्वेन व्याप्तिप्रदर्शनतोऽक्षणिकस्य परमार्थसतो वैधर्म्यदृष्टान्तस्यानुपपत्तिः, विपक्षव्यावृत्त्यसंभवेन केवलान्वयी अयं हेतुः स्यादगमकः, त्रिरूपस्यैव गमकत्वेन हेतोरुक्तत्वात् । न विपक्षाद्व्यावृत्तिर्हेतोस्तृतीयं रूपम्, येनैष दोषः स्यात्, अपि तु साध्याभावे साधनाभावात्मको व्यतिरेकोऽत एव ततोऽन्य-

स्तद्विरुद्धस्तदभावो विपक्षोऽस्माभिरुक्तः स चास्यास्ति, इति न केवलान्वयित्वम् । तदुक्तम्

'तस्माद्वैधर्म्यदृष्टान्ते नेष्टोऽवश्यमिहाश्रयः ।
तदभावेऽपि तन्नेति वचनादपि तद्गतेः ॥'

इति । यद्येवं सन्दिग्धव्यतिरेकोऽयं हेतुर्वचनगम्यस्यार्थस्य सन्दिग्धरूपत्वात् 'निधिमानयं भूभागः' इतिवत् । निश्चितरूपत्वे हि प्रतिज्ञामात्रादेव साध्यसिद्धेः किमनेनासिद्धेरुपन्यासायासेन । ननु वैधर्म्यदृष्टान्ताभावेऽप्यस्य विपक्षे बाधकप्रमाणबलाद्व्यतिरेकनिश्चयोऽस्ति, इति न सन्दिग्धव्यतिरेकता । यद्येवं तदेव बाधकं प्रमाणं प्रथममुपन्यसनीयं तेन विना हेत्वभिधानस्यास्यानभिधानसमानत्वात् । नन्वक्षणिकस्य सतो विनाशहेत्वयोगादि नास्य विरुद्धत्वात्, विनाशहेत्वयोगो ह्यविनाशं साधयति न तु क्षणिकत्वम् । एवं तर्हि दृष्टत्वेन विशेष्यते, घटादीनां हि अविनश्वरस्वभावत्वे दृष्टस्य कृतकत्वादिनानुमितस्य वा विनाशस्य हेतुरसमर्थ एव विनश्वरस्वभावत्वे वा व्यर्थः, स्वभावादेव विनाशसिद्धेः । स्वभावस्य चाविशेषात् प्रतिक्षणं सतो विनाशः सिद्ध्यति, इति । यद्येवमसिद्धो ग्राहकात्मनो विनाशहेत्वदर्शनस्य प्रतिपादितत्वात् दृष्टविनाशादेव च विपक्षादनेनास्य हेतोर्व्यतिरेकः सिद्ध्यतीति, न अदृष्ट-

विनाशात् परमाणवादेः संभाव्यमानादिति पुनरपि सन्दिग्धविपक्षव्यावृत्तिरयमनैकान्तिक एव, न च विनाशहेतोरत्रासामर्थ्यमेव वैयर्थ्यं वा,–इति वक्ष्यामः। तर्हि नित्यस्य क्रमयौगपद्याभ्यामर्थक्रियाविरोधात्,–इत्येतद्विपक्षे सर्वत्रास्तु बाधकं प्रमाणम्, न आश्रयासिद्धत्वादिदमप्यप्रमाणमेव, नहि नित्यः कश्चिदर्थो भवद्भिरभ्युपगम्यते यत्रायं हेतुः सिद्धः स्यात्। प्रतिवादिनः सिद्धत्वाद्धेतुरेवेति चेत् कथं तस्य सिद्धिः, धर्मिणः सिद्धत्वादिति चेत्, स कुतोऽस्य सिद्धः; प्रमाणेन यदि, वादिनोऽपि सिद्ध एव वस्त्वधिष्ठानात् प्रमाणस्येति कथं नित्यप्रतिक्षेपः; अथाप्रमाणादभ्युपगममात्रात् तस्य सिद्ध इत्युच्यते, यद्येवमसदेवासौ कथं वस्तु साधयेत् वस्तुनो हि वस्तुसिद्धिरित्युक्तम्। ननु यत्र क्रमयौगपद्याभ्यामर्थक्रिया तत्र क्षणिकत्वं क्षणिकत्वाभावे तु क्रमयौगपद्याभ्यामर्थक्रियाभावः, इति धर्मयोर्व्याप्तिमात्रप्रदर्शनेन धर्मिणः कस्यचिदनाश्रयात् नाश्रयासिद्धता अत्र दोषः। यदाहालङ्कारकारः

'प्रसङ्गसाधनमिदं नाश्रयासिद्धता ततः।
यद्येवं स्यादिदमपि न चोभयमितीष्टिता॥'

इति। यद्येवमपक्षधर्मत्वेन न्यूनत्वादयमहेतुरेव कथमस्य विपक्षव्यावृत्तिं साधयेत्, नहि अन्वयव्यतिरेकावेव हे-

तोर्लक्षणं त्रिरूपस्यैव हेतुत्वेनोक्तत्वात्, प्राग्वच्च व्याप्ति-रपि अत्रासिद्धा,—इति दर्शयिष्यामः। धर्मोत्तरास्त्वाहुः—'सत्त्वं क्रमयौगपद्याभ्यां व्याप्तम् अतः क्रमयौगपद्याभा-वेन सत्त्वाभावोऽत्र व्यापकानुपलब्ध्या साध्यस्तत् ना-श्रयासिद्धत्वमभावस्य असत्यपि शशविषाणादाविव नि-त्ये धर्मिणि सिद्धत्वात्। भावात्मनो हि हेतोस्तत्रैष दो-षत एव प्रसङ्गविपर्ययनिष्ठः प्रसङ्गहेतुः' इति। एतदप्ययुक्तं भवद्भिरपि स्वसाध्यप्रतिबद्ध एव हेतुरुच्यते। यदुक्तम्

'कार्यकारणभावाद्वा स्वभावाद्वा नियामकात्।
अविनाभावनियमः ........................ ॥'

इति। न चाभावरूपहेतोरत्यन्तावस्तुनः क्वचित् प्रति-बन्धः संभवति,—इत्यहेतुता। यदाहालङ्कारकारोऽपि

'अभावमात्रके हेतौ क्व किं केन प्रसाध्यताम्।'

इति। [1]प्रतिबन्धो हि नाभावरूपता, इत्यसिद्धत्वमुक्तम्; शशविषाणादीनां तु विकल्पकल्पितत्वेनाभावव्यवहारा-दिमात्रविषयत्वं काल्पनिकमेव सिद्धं न तु कस्याचित् साधनतयेत्यविरोधः, अत एवानुपलब्धेः प्रतिपत्त्यध्य-वसायवशादभावसाधनत्वम्; परमार्थतस्तु वस्तुनो वि-शिष्टाद्विशिष्टस्य वस्तुनः सिद्धेः स्वभावहेतुतैवेत्युक्तं भ-वद्भिरेव—

---

१ ख० ग० पु० प्रतिबन्धे हि तस्य इति पाठः।

'प्रयोगः केवलं भिन्नः सर्वत्रार्थो न भिद्यते।'

इति। न किंचिदेतत्। अन्ये पुनराहुः— 'यदेव सपक्षत्वेन घटादीष्टं तदेव तावद्विपक्षत्वेनापि, तन्निष्ठं च बाधकं प्रमाणमिति कुतोऽस्याश्रयासिद्धता। यद्येवं पुरुषेच्छाकृतास्य सपक्षविपक्षादिव्यवस्था न वस्तुतः,— इति पक्षसपक्षान्यतरत्वादेरिवानुमानाभासता, न च सपक्ष एव विपक्षः संभवति साध्यभावाभावयोरत्यन्तविरोधात् न वस्तुतोऽस्य सपक्षाद्विपक्षत्वं तु घटादेरारोप्य बाधकेन प्रमाणेन निषिध्यते, यदि घटादेरक्षणिकत्वं स्यात् ततोऽक्षणिकस्य क्रमयौगपद्याभ्यामर्थक्रियाविरोधः स्यात्, करोति चार्थक्रियाम् अतः क्षणिक इति। यथा यद्यत्र वह्निर्न भवेत् धूमोऽपि न भवेत्, अस्ति च धूमः तस्मादत्राग्निरित्यविरोधात् नाश्रयासिद्धता, इति। तदप्ययुक्तं विरोधासिद्धेः, अक्षणिकस्यैव घटादेः क्षीरघृतधारणाद्यर्थक्रिया क्रमेण, प्रदीपादेश्च वर्तिदाहतैलक्षपणादिका युगपद्दृश्यते,— इति कुतस्तद्विरोधसिद्धिः। तस्यैकस्वभावत्वात् क्रमेणार्थक्रियाया अनुपपत्तेः सर्वाः कालान्तरकार्या अपि युगपत् कुर्यात्, न च ता युगपत् कुर्वन् दृश्यत इत्यतो विरोधसिद्धिः। न, अस्यापि हेतोर्व्यधिकरणासिद्धत्वात् यस्य हि युगपदनेकार्थक्रियाजनकः स्वभावः स प्रदीपादिर्युगपत्ताः कुर्वन् दृश्यत एव। यस्तु क्रमेण कार्यं कुर्वन् दृश्यते स क्रमेणै-

वानेकार्थक्रियाजननैकस्वभावः सिद्धो न युगपदित्यविरोधः । अथ किमर्थं क्रमेण करोति ? तथास्वभावत्वाद्युगपदिवेति वक्ष्यामः । तदेवं विपक्षे बाधकस्य प्रमाणस्यासंभवादनैकान्तिकमेतत् न क्षणिकत्वस्य साधकं प्रमाणमिति । अभिनवशाक्यास्त्वाहुः — नास्य विपक्षे बाधकप्रमाणवशादसत्तानिश्चयोऽपितु वस्तुप्रतिबन्धाधिष्ठानाद्विचारादेव, सत्त्वं हि विचार्यमाणं तेजोरूपं दाहकत्व इव स्वभावप्रतिबन्धादेवाक्षणिकात् निवर्तमानं क्षणिकत्वे विश्राम्यति,— इति वस्तुस्वरूपपर्यालोचनासिद्धमेतत् अतो नाश्रयासिद्धतादिपूर्वोक्तदोषप्रसङ्ग इति । यद्येवमर्थापत्त्यात्मकोऽयं विचारः प्रोक्तप्रतिभात्मको वा । यथाहुर्वैयाकरणवृद्धाः ‘नापूर्वं किंचित्’ इति । प्रमाणान्तरत्वादस्य प्रत्यक्षमनुमा च प्रमाणमेवेत्यभ्युपगमविरोधः, अप्रमाणत्वे तु कथं ततो विपक्षाभावनिश्चयः सदसन्निश्चयहेतोरेव प्रमाणत्वात् । ननु वस्तुस्वरूपपर्यालोचनयापि नयविदामसन्निहितार्थविषय ऊहात्मको निश्चयो दृश्यते एव । सत्यम् योग्यतानुमानादेवासौ नान्यतः । यदुक्तं भवद्भिरपि

‘हेतुना यः समग्रेण कार्योत्पादोऽनुमीयते ।
अर्थान्तरानपेक्षित्वात्मस्वभावोऽनुवर्णितः ॥’

इति । अपि च प्रतिबन्धाधिष्ठानो विचार इति कोऽर्थः । किं विचारात् प्रतिबन्धसिद्धिराहोस्वित् सिद्धे प्रतिबन्धे वि-

चार इति। पूर्वस्मिन् कल्पेऽत्यन्तासम्बद्धयोर्घटपटयोरपि विचारात् प्रतिबन्धः स्यात्,— इत्यनवस्था। अथ द्वितीयः पक्षः, तर्हि प्रत्यक्षसिद्धत्वात् प्रतिबन्धस्य तेजोदाहकत्वयोरिवोत्तरकालभावी अयं विचारः स्मृतिपूर्वो व्यवहार एवोक्तः स्यादिति न ततोऽपूर्वार्थप्रतिपत्तिः। यदुक्तम्

'तद्दृष्टावेव दृष्टेषु संवित्सामर्थ्यभाविनः।
स्मरणादभिलाषेण व्यवहारः प्रवर्तते॥'

इति। न च सत्त्वक्षणिकत्वयोः कथंचिदपि प्रतिबन्धः सिद्धः, इति तद्विषयस्य विचारस्यानुपपत्तेः कथं ततोऽस्य हेतोर्विपक्षाद्व्यावृत्तिर्येन क्षणिकत्वसिद्धौ मानता स्यादिति॥ २२॥

अभ्युपगम्यापि क्षणिकपक्षमनिर्मोक्षप्रसङ्ग इत्याह

**पुनर्भवप्रसङ्गः स्या-**
**न्निर्निमित्ते ह्युपप्लवे।**

ते हि दुःखात्मनोऽस्य संसारस्य समुदये निमित्तमविद्यातृष्णे गीयेते। यदुक्तम्

'दुःखे विपर्यासमतिस्तृष्णाशा बन्धकारणम्।
जन्मिनो यस्य ते न स्तो न स जन्माधिगच्छति॥'

इति। न च तयोर्निर्निमित्तत्वमुपपद्यते प्रतिक्षणं पूर्वस्यैव नीलपीतादिज्ञानक्षणात्मनः समनन्तरप्रत्ययस्यात्र निमि-

त्त्वाभ्युपगमतोऽन्यस्यासंभवात् । तदुक्तम्

'यस्मिन्सति भवत्येव यत्ततोऽन्यस्य कल्पने ।
तद्धेतुत्वेन सर्वत्र हेतूनामनवस्थितिः ॥'

इति । ततो निमित्तान्तराभावेनैतावन्मात्रनिमित्तत्वादस्य संसारात्मनो विप्लवस्य प्राग्वत् पुनःप्रसङ्गात् मोक्षलक्षणस्य निरोधस्य तदुपायस्य च समुदयविरुद्धभावनारूपस्य मार्गस्यानुपपत्तेः, दुःखसमुदयनिरोधमार्गाणां चतुर्णामपि आर्यसत्यानामसत्यतैव, इति ।

अस्तु वा कदाचित् पारम्पर्येणापि एतत्, रागादिविप्लवोऽस्यैव निमित्तं न तु ग्राह्यग्राहकात्मनः, इत्याह

निमित्तं साधु वक्तव्यं
मेयमानव्यवस्थितेः ॥ २३ ॥

नहि यत्र ग्राह्यग्राहकव्यवस्था तत्राविद्यातृष्णे भवतामपि सिद्धे, वीतरागपुरुषाणां सर्वज्ञानां च तयोरसंभवादसाध्वयुक्तमत्र तयोर्निमित्तत्वम् ॥ २३ ॥

ननु ग्राह्यग्राहकव्यवस्थानिमित्तत्वमेतयोः स्वप्ने सिद्धमित्याह

स्वप्नादिप्रत्यया येऽन्ये
दृष्टान्तत्वेन ते मताः ।

वासनादिकृतास्तेऽपि
सुस्थिरा[1]णोर्भवन्ति हि ॥ २४ ॥

नहि तत्रापि तयोर्निमित्तत्वं केनापि प्रमाणेन सिद्धमपितु कर्मोपसंस्कृताया अनुभववासनाया एव यथानुभवं रूपाद्यालोकनेन दुःखादिवेदनात् जात्यन्धानां स्वप्ने रूपाद्यनवभासाच्च, वासना च स्थिरात्मवादिनामेवोपपद्यते न क्षणिकपक्षे, इत्युक्तं प्राक्। कथं तर्हि भ्रान्तिप्रतिभासा न विषया द्विचन्द्राद्याकारावभासनात् नासत्यविषया असतो भासनायोगात्, न विपरीतार्थास्तेन तेन रूपेण तस्यासत्यत्वतः प्रोक्तदोषात्, नात्माकारास्तस्याविकारात् किंतु अध्यवसायवासनोपस्कृतबुद्ध्याकारविषया एवेत्युक्तमन्यत्र

'अन्तःकरणतत्त्वस्य भागा बहिरिव स्थिताः।

इति तेषामपि विप्लवनिमित्तता ॥ २४ ॥

एतदेव दर्शयति

समस्तमेयमानादि
गीतं धीवादिनापि हि
अन्तर्भावग्रहात्सत्त्वात्
मिथ्यात्वमपि तस्य न ॥ २५ ॥

---

१ ख० पु० सुस्थिरेऽणोर्भवन्ति नः, इति पाठः।

नहि ग्राह्यग्राहकग्रहणात्मनो भेदस्यास्य विज्ञानवादिभिरभावोऽभिधातुं शक्योऽनुभवसिद्धत्वात् अपितु विज्ञानस्वभावत्वमेव । ततोऽन्तर्भावग्रहाद्विज्ञानरूपत्वेनापि अस्य सत्त्वात् मिथ्यात्वमुपप्लवरूपत्वं नोपपद्यतेऽपितु बोधरूपतैवेत्यनिवर्त्यत्वाद्द्वयासिद्धेरनिर्मोक्ष एवेति ॥ २५ ॥

ननु ग्राह्यग्राहकप्रकाशस्य प्रमाणबाधितत्वादनात्मन्यात्मबुद्धेरिवोपप्लवरूपत्वमेव न विज्ञानस्वभावता, तथाहि प्रत्यक्षं सर्वमिदं घटादि ग्राह्यं ग्राहकान्न भिद्यते ग्राह्यत्वात्, भेदे हि देवदत्तयज्ञदत्तज्ञानयोरिव परस्परमग्राह्यता स्यात् । अस्ति च सा, ततो द्वयाभाव एवेति । यदाहुः

'परमार्थेन न ग्राह्यं ग्राहकं वा न किंचन ।
अविद्यानिर्मितः सर्गो विप्लवोऽयं जनस्य तु ॥'

इति, अत आह

प्रत्यक्षं ज्ञानमेवेति
मिथ्यावाक्यं तदेव हि ।
सर्वं प्रतीयते यस्मात्
न च बाधः कथञ्चन ॥ २६ ॥

एतदपि परस्पराविरुद्धत्वान्न बाधकं बाधकस्याप्यस्य ज्ञानस्य बाध्यमानार्थविषयत्वात् तदविषयत्वे तन्निषेधानुपपत्तेर्बाधकत्वायोगः, इति ग्राह्यस्य सर्वस्याबाध्यत्वेन प्रती-

यमानत्वात् न अनात्मन्यात्मबुद्धेरिवोपप्लवरूपतेति, अत एव 'प्रत्यक्षा बुद्धिरेव' इत्यादिनात्रापौनरुक्त्यं साध्यभेदात् ॥ २६ ॥

किंच धर्मिस्वरूपविपरीतसाधनोऽयं हेतुर्भवतामित्याह

ग्राह्यत्वादर्थवद्बुद्धे-
रनवस्था प्रसज्यते।

ग्राह्यत्वाद्बुद्धिसंवेद्यत्वेऽर्थस्य ज्ञानस्यापि ज्ञानान्तरग्राह्यत्वेनैव संवेद्यत्वादस्वसंवेद्यताप्रसङ्गः, तस्यापि चासंवेद्यत्वे तद्ग्राहकत्वानुपपत्तेस्तस्य तस्यापीत्यनवस्था ॥

नन्वज्ञातमपि ज्ञानमिन्द्रियमर्थवत् ज्ञानान्तरं ग्रहीष्यति ततो नानवस्थेति पूर्वानुवादेनाह

बुद्ध्यन्तरगृहीता धी-
र्यद्यर्थे संप्रवर्तते ॥ २७ ॥
स्यादसंस्था तयोर्यावन्नैवं दृष्टं कदाचन।

युक्तमेतत् चक्षुरादीनामर्थसाक्षात्कारं प्रति कारकत्वात्। ज्ञापकानां लिङ्गशब्दादीनां स्वप्रकाशं विना ग्राह्यप्रकाशकत्वं न कदाचिद्दृष्टमिति ज्ञानस्यापि ज्ञापकत्वात् स्वप्रकाशं विना ज्ञानान्तरग्राहकत्वव्यवस्था नोपपद्यते, इति सर्वाप्रत्यक्षत्वप्रसङ्गः। तदुक्तम्

'अप्रत्यक्षोपलम्भस्य नार्थदृष्टिः प्रसिद्धयति ।'

इति ॥

किं च बाह्यसिद्धोऽयं हेतुरित्याह

**स्वांशं प्रत्यवसानं च**

**विज्ञानं तेन कल्प्यते ॥ २८ ॥**

विज्ञानवादिनापि एकस्य विज्ञानस्य घटाद्यात्मनोऽनेकत्वं परिकल्प्यम् । यदुक्तम्

'एकं चेच्चित्रविज्ञानमिदं चित्रतरं ततः ।'

इति ज्ञानांशपरमाणुपर्यन्तो भेदः कल्पनीय इति घटादेरर्थाभिमतस्य प्रत्यक्षत्वासिद्धिरित्यनुभवविरोधश्च ॥२८॥

अपि च विज्ञानसंतानान्तरमपि न शक्यमेव कल्पयितुमिति किमर्थं शास्त्रप्रणयनं दानादि वेति सर्वव्यवहारप्रलोपोऽस्येत्याह

**न चाप्यालम्बनं भिन्नं**

**संतानान्तरमस्ति हि ।**

**स्वाकारं चेत्यमित्यस्मा-**

**त्सर्वाभावः प्रसज्यते ॥ २९ ॥**

कायवाग्व्यवहारो हि स्वशरीरे विशिष्टविज्ञानपूर्वको

दृष्टः, इति परशरीरेऽपि तद्दर्शनाद्विज्ञानमनुमीयते सर्वैरेव। विज्ञानवादिनां तु स्वाकारस्यैव सर्वस्य चेत्यत्वात् स्वप्नवत् परशरीरासिद्धेर्मिथ्या एष प्रतिभासः, इति कुतस्ततो ज्ञानसंतानान्तरसिद्धिः; सिद्धावपि तन्न भिन्नमालम्बनं सिध्यति अर्थवत्तस्यापि भिन्नस्य साकारेण निराकारेण वा ज्ञानेन विषयीकर्तुमशक्यत्वादिति तदपि स्वाकारात्मकमेव वेद्यं सिध्यतीति।

यदुक्तम्

'बुद्धिपूर्वां क्रियां दृष्ट्वा स्वदेहेऽन्यत्र तद्ग्रहात्।
ज्ञायते यदि धीश्चित्तमात्रेऽप्येष नयः समः॥'

इति। तदपि अयुक्तमित्यतः कः कस्य किं कुर्यादिति सर्वव्यवहाराभावप्रसङ्गः, ततः सत्यभूत एव ग्राह्यग्राहकभेदोऽभ्युपगन्तव्यः, इत्यनिवर्त्यत्वादद्वयासिद्धेरनिर्मोक्ष एव भवताम्॥ २९॥

अधुना यैर्बाह्यमभ्युपगम्य साकारमेव तस्य ग्राहकमिष्यते 'अर्थज्ञानयोराकारभेदं नोपलभामहे' इति वद्भिस्तान्प्रत्युच्यते

**संगुप्तकरणस्येह**
**योगिनो बुद्धिपद्धतिः।**
**अपास्तविषयाकारा**
**दृष्टा तस्मात्प्रतीयते॥ ३०॥**

शब्दादिविषयो योऽपि
बोधः सोऽप्यतदाकृतिः ।
तत्परिच्छेदरूपोऽसौ
तदाकार इति भ्रमः ॥ ३१ ॥

भवेदेतत्, यद्यर्थज्ञानयोराकारभेदो नोपलब्धो भवेत् । स तूपलभ्यत एव । तथा हि समुपहृतसमस्तकरणवृत्तेरत एव विनिवृत्ताखिलविषयाकारवेदनस्य संविन्मात्रयोगिनः शुद्धमेव विज्ञानात्मरूपं प्रबन्धेन प्रकाशते, इति भवदागमेऽपि दृष्टमद्वयस्यार्थानारूषितस्यान्यथाप्राप्यसंभवात् । प्रोक्तं चाध्यात्मकुशलैरपि

'तदा द्रष्टुः स्वरूपेऽवस्थानम् ।' ( पात० सू० १ । ३ )

इति, अर्थाकाराद्भिन्न एव ग्राहकः सिद्धस्ततो भेदादेव शब्दादिपरिच्छेदकाले तत्परिच्छेदकत्वमेव ग्राहकात्मनोऽनुभवसिद्धत्वात् प्रत्येतुं शक्यं, न तु शब्दाद्याकाररूपतानुभवविरोधादिति साकारपक्षोऽपि भ्रम एव ॥३१॥

एतदेव घटयन्नाह

अर्थ एव हि साकारो
यतस्तद्भान्स गृह्यते ।

अर्थो हि अनेकनीलपीताद्याकारभेदभिन्नो ग्राहकात्मनः प्रत्यग्रूपेणाध्यात्ममनुभूयमानात् पुरोरूपत्वेन बहिर्देशसंबद्धः साकार एव वेद्यते, इति ततोऽनाकाराज्ज्ञानाद्भिन्न एव युक्तः ॥

एवं ग्राहकात्मापेक्षयोक्ताध्यवसायापेक्षयापि आह

पूर्वं च गृह्यते वस्तु
बोधः पश्चादिति स्थितिः ॥ ३२ ॥

झटिति इन्द्रियार्थसंयोगे हि प्रथममध्यवसायरहितं शुद्धमेव वस्तु, पश्चात्तु 'घटोऽयम्' इत्याद्यध्यवसायोऽपि संवेद्यते, इति तद्भेदोऽप्ययुक्तः। ननु बुद्ध्यवसितमर्थं पुरुषश्चेतयते, इति सर्वेषां बुद्धिपुरुषविवेकवादिनामभ्युपगमः, ततः पूर्वमध्यवसायः पश्चात्संवेदनमिति भवतां स्थितिर्युक्ता न त्वियं शाक्यदर्शनपरिदृष्टेति। सत्यम्, स्मृतिप्रतिभादावेवासौ, न सर्वत्रानुभवविरोधात्; नहि प्रतिदर्शनमनुभवभेदो युक्तस्तस्य वस्तुसिद्धत्वात् नहि नीलं शाक्यानामेव नीलमार्हतानां तु पीतमिति शक्यमतिनिपुणतरैरपि वक्तुम्। अनुभवो हि अयं वस्तुसामर्थ्यसिद्धः प्रथममनध्यवसायात्मक एव संवेद्यमानः कथमन्यथा व्यवस्थापयितुं शक्यः। यदाहुः

'अस्ति ह्यालोचनं ज्ञानं प्रथमं निर्विकल्पकम्।
बालमूकादिविज्ञानसदृशं शुद्धवस्तुजम् ॥

१ ख० पु० ज्ञानात्मन इति पाठः।

ततः परं पुनर्वस्तुधर्मैर्जात्यादिभिर्यया ।

बुद्ध्यावसीयते सापि प्रत्यक्षत्वेन संमता ॥ '

इति युक्तमुक्तम् ' इति स्थितिः ' इति ॥ ३२ ॥

ननु नाकारणं विषयो ज्ञानस्यानवस्थाप्रसङ्गात् कारणत्वे चेन्द्रियादेरपि प्रसङ्गात् तदाकारतैव युक्ता, इत्याह

**वस्तुनो जनकत्वं हि**

**बुद्धिं प्रत्युपकारिता ।**

**कर्मतेन्द्रियसंबन्धा-**

**दादानं नाकृतेरतः ॥ ३३ ॥**

बुद्धिं प्रति वस्तुनो जनकत्वमुपकारित्वं कर्मता ग्राह्यत्वमेवोच्यते यतः, ततो न तदाकारादानमुपपद्यते, नाप्यनवस्थेत्याह—इन्द्रियसंबन्धात् । ग्राह्यत्वाविशेषेऽपि यदेवेन्द्रियसंबद्धं वस्तु तदेव गृह्यते नान्यत् यतः ।

तदुक्तम्

' सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत् प्रत्यक्षम् ।'

(पूर्वमी० सू० १ । १ । ४ ।)

इति, अतो निराकारपक्षस्यैवानुभवसिद्धत्वादबाधितत्वाच्च सत्यत्वमिति साकारपक्षो भ्रान्त एवेति, अतश्च मुक्तावद्ध्यासिद्धिरित्युपसंहारः ॥ ३३ ॥

नन्वेवमपि क्षणिकत्व इवाक्षणिकत्वेऽपि ग्राह्यस्य प्रमाणाभावात् क्षणिकत्वाक्षणिकत्वसंदेहादपि उपप्लवरूपमित्यक्षणिकत्वे प्रमाणमाह

अतोऽपि प्रत्यभिज्ञाना-
द्व्यभिचारे तु सत्यपि।
स्थैर्यं क्वचिद्गृहीतं यत्
स्वभावत्वेन वस्तुनः॥ ३४॥

न केवलं प्राक्प्रदर्शितनयेन ग्राहकात्मन्येव स्थैर्यं यावत्तद्ग्राह्येऽपि अर्थे[1] प्रत्यभिज्ञानादिति 'अयं घटः' इति स्थिरत्वेनैवाध्यवसायात्, नहि भवद्भिरप्यध्यवसीयमानं स्थैर्यमर्थेष्वपह्नोतुं शक्यमिति दर्शितं प्रागेव। ननु लूनपुनर्जातेष्विव केशनखादिषु सादृश्यनिबन्धना स्थैर्यप्रतिपत्तिर्भविष्यति,—इत्याह क्वचिद्बाधकबलात् व्यभिचारे तु सत्यपि अन्यत्राबाधिते विषये सत्यरजते रजताध्यवसायस्यैव बाधकाभावादव्यभिचारः, अत्रापि बाधकं प्रमाणं भविष्यतीति चेत् न, असंभवादित्याह 'गृहीतं यत्' इति। यस्मादिदं स्थैर्यं वस्तुग्राहिणा प्रत्यक्षेण नीलादिवत् प्राग्गृहीतमेव, अगृहीते हि वस्तुरूपेऽध्यवसिते शुक्तिकारजतादेरिव केशनखस्थैर्याध्यवसाय-

१ अर्थेऽपि पाठः।

स्य बाधो भवत्येव, न तु गृहीते नीलाध्यवसायस्येवानवस्थाप्रसङ्गात् । ननु स्थैर्यस्यानेककालव्यापारात्मकत्वाद्वर्तमानमात्रग्राहिणा प्रत्यक्षेण ग्रहणं न संभवति,—इत्याह 'स्वभावत्वेन वस्तुनः' इति । स्थैर्यमपि वस्तुस्वभावात्मकमेव तदस्वभावत्वेन वस्तुनस्तदनुपपत्तेः प्रणालिकाग्रनिर्यत्त्वरिततरजलप्रवाहवत् प्रतिक्षणविनश्यद्रूपमेव सर्वं वस्तु दृष्टं स्यात्,—इति प्रत्यक्षविरोधः स्थिरात्मतयैव वस्तुनो ग्रहणात् । तदुक्तम्

'रजतं गृह्यमाणं हि चिरस्थायीति गृह्यते ।'

इति । न च सदृशापरापरोत्पत्तेः स्थैर्यप्रतिपत्तिर्भ्रान्तेति युज्यते वक्तुं तस्यापि असिद्धेः, सिद्धे हि क्षणिकत्वे कदाचिदेतदुपपद्यते । अतश्चाद्ययावत् किमात्मकं केन केन प्रमाणेन सिद्धमिति न कस्यचित् सिद्धम् । न च वस्तुस्वभावोऽपि वस्तुनि गृहीते न गृहीत इति शक्यं वक्तुमभेदात् । यदुक्तं भवद्भिरपि

'एकस्यार्थस्वभावस्य प्रत्यक्षस्य सतः स्वयम् ।
कोऽन्यो न दृष्टो भागः स्याद्यः प्रमाणैः परीक्ष्यते ॥'

इति । नापि च प्रत्यक्षं वर्तमानमात्रग्राहि तस्यापि स्थिरात्मकत्वात्, इन्द्रियार्थसन्निकर्षस्तु वर्तमानो न प्रत्यक्षोऽर्थस्तत्संविद्वा आत्मस्वभावत्वात् तस्याः,—इति प्रतिपादितम् ॥ २४ ॥

एतदेव दर्शयति

भूयो भूयो हि योऽर्थात्मा
गृह्यते त्वेकया धिया ।
यदा तदा च तत्स्थैर्यं
ब्रूत केन निवार्यते ॥ ३५ ॥

एवं हि बोधिसत्त्वानामपि पुनः पुनर्दृश्यमानेषु जायाजनन्यादिष्वर्थेषु गुरुदासादिषु चानुरूपो व्यवहार उपपद्यतेऽन्यथा विपर्यय एव स्यात्। ननु संतानस्य जननीत्वं जायारूपता वेति चेत् न, तस्यापि संतानिव्यतिरेकेण वस्तुतोऽसंभवात् सन्तानिनः क्षणस्यैव जननीत्वं यतो जातः तस्यैवाभ्युपगन्तव्यम्। ततः पञ्चमस्य तु क्षणस्य 'पञ्चमीं मातृबन्धुभ्यः' इति समाचाराज्जायात्वं भवदविरुद्धमेव स्यादिति जितं पशुभिर्भवद्दर्शनचेष्टानिष्ठैरेव। कथं वा पर्वतादिषु सर्वदैकरूपावभासेषु न स्थैर्यम् ॥ ३५ ॥

ननु पर्वतादिष्वपि हेमन्तग्रीष्मादिजनितशैत्योष्णतादिविरुद्धधर्मयोगादवश्यं तद्भेदेन भेदस्ततः स्थैर्यानुपपत्तिरित्याह

शीतादिभेदतो भेदो
नहि भेदधियं विना ।

नहि ग्रीष्महेमन्ताद्यात्मकशीतातपादीनामिव तद्-भिव्यङ्ग्यस्य तज्जन्यस्य वा शैत्योष्णतादेः पर्वतात्मनः स्वभावस्य भेदो युगपत् साकारज्ञान इवैकसामग्रीप्रतिबद्धे रूपादाविव वा क्रमेण विचित्रैकस्वभावयोगात् । साकारं हि घटादिविज्ञानमेकमनेकरूपमेकसामग्रीप्रतिबद्धं च रूपाद्यनेकोपकारस्वभावमभ्युपगतमेव भवद्भिः, अन्यथा प्रतिपरमाणु भेदकल्पनया स्थूलाकारावभासस्यानेकोपकारायोगाच्च सामग्र्यसंभवेन विशिष्टकार्योत्पादस्याभावप्रसङ्ग इत्युक्तम्, तथेहापि क्रमेणानेकरूपानेकोपकारस्वभावस्य चाभ्युपगमादविरोधः । ननु यौगपद्येनानेकस्य रूपस्यानेकोपकारशक्तीनां च तत्र समुच्चयाद्युक्तमैक्यम्, क्रमे तु परस्परपरिहारस्यावश्यंभावादत्र भेद एवेति । न, तत्रापि पृथुबुध्नोदराणामनेकोपकारशक्तीनां च परस्परपरिहारेणैव स्थितेः, अन्यथा हि अणुमात्रमेव पिण्डः प्रतिभासेत, रूपादिसामग्र्यपि एकमेव कार्यं कुर्यादिति सर्वमसमञ्जसम् । तद्यथा तत्रैकमनेकरूपमनेकोपकारशक्तियुक्तं चैकं युगपत्तथास्वभावत्वादुपपद्यते, तद्वदिह पर्वताद्यपि क्रमेणानेकरूपमनेकोपकारशक्तियुक्तं चैकमेव तथास्वभावं स्थिररूपमनुभवतः सिद्धमिति विरुद्धधर्मायोगात् न शीतादिभेदतो भेदोऽपितु यत्र भिन्ना बुद्धिस्तत्रैव घटपटयोरिव भेदः, यत्र त्वभिन्ना तत्र घटाकारे विज्ञान इवाभेदः,— इत्यविरोधः । यदुक्तं भवद्भिरपि

'अभिन्नवेदनस्यैकं यन्नैवं तद्धि भेदवत्।
सिद्धयेदसाधनत्वेऽस्य न सिद्धं भेदसाधनम्॥'

इति॥

अभ्युपगम्यापि शीतादिभेदेन भेदमाह

तदभेदादभेदश्च
यावत्तावत्प्रसिद्धयति॥ ३६॥

शीतातपादिभेदवत्तज्जनितशैत्योष्णतादिधर्मभेदेन पर्वतादेर्भेदेऽपि यावत्कालमभेदः शीतस्य हेमन्तात्मनो ग्रीष्मरूपस्य चातपस्य तावत्कालमभेदः, पर्वतादावपि स्थैर्यं केन निवार्यते विरुद्धधर्मयोगाद्धि भेदः प्रतिपादितो न च तावन्तं कालमसावस्ति, इति तावन्तं कालं स्थैर्यं सिद्धमेव॥ ३६॥

ननु परतः स्वभावादेव तेन नष्टव्यम्, इत्यविशेषात् पूर्वमपि विनश्येदिति क्षणिकत्वसिद्धिः,—इत्याह

विलक्षणस्य तूत्पादे
कारणात्तन्निवर्तते।
चिदात्मनः समुच्छेदो
जन्म तस्याचितोऽपि च॥ ३७॥

शैत्यस्वभावात्तस्मात् पर्वतादेरातपादिसहकारिणस्त-स्यौष्ण्यधर्मकस्यान्यस्यैव पर्वतादेरुत्पादे सति तत एवा-तपादेः कारणात् तत् पूर्वं शैत्यस्वभावं पर्वतादि नि-वर्ततेऽन्वयव्यतिरेकाभ्यां तथावगतेर्न तु स्वभावमात्रादि-ति कुतः क्षणिकत्वप्रसङ्गः । यथा च विनाशहेतोरसा-मर्थ्यवैयर्थ्यादयो न दोषास्तथा वक्ष्यामः । तत एव च कारणात्तदानीं तत्र प्रत्यभिज्ञाप्रत्ययस्यापि निवृत्तिः, तस्याचेतनस्य विलक्षणस्यौष्ण्यधर्मकस्य पर्वतादेर्जन्म यतः । इदमेव च धर्मपरिणामं स्थैर्यवादिनः समाचक्षते ॥ ३७ ॥

अथ कथमेकोऽसौ विलक्षणमेतत् कार्यत्रयं करोति,—इत्याह

स्वभावेन च सर्वत्र

वैचित्र्यं न भवे भवेत् ।

यद्येवं नाभ्युपगम्येत तदा सर्वत्रास्मिन् संसारे स्व-भावेन वैचित्र्यमनेककार्यकर्तृत्वं न कस्यचिदपि भवेदि-ति प्रदीपादिरपि वर्तिदाहतैलक्षपणादिकार्यमनेकं न कु-र्यात्,—इति प्रत्यक्षविरोधः, तत एतदवश्यमेष्टव्यम् ॥

किं च क्षणिकपक्षे कार्यकारणभावो न ज्ञातुं श-क्यः,—इत्याह

पूर्वोत्तरक्षणाज्ञाना-

त्कार्यकारणता कुतः ॥ ३८ ॥

क्रियापलापनिबन्धनः क्षणिकवादः,—इति न क्रियाविशेषयोगात् कारणत्वं वह्न्यादेरपितु प्राग्भाव एव, पश्चाद्भावस्तु धूमादेः कार्यता। तौ च पूर्वापरादिवत् पूर्वापरभावौ परस्परसम्बन्धिरूपत्वात् नैकैकक्षणग्रहणकाले ग्रहीतुं शक्यौ; न चोभयक्षणग्राहकं ज्ञानान्तरं भवतां संभवति क्षणद्वयस्थितिविकलत्वेन भावानामभ्युपगमात्। ततः 'प्रत्यक्षानुपलम्भसाधनः कार्यकारणभावः' इत्येतदपि अयुक्तमिति ॥ ३८ ॥

ननु धूमहेतुस्वभावत्वाद्वह्निक्षणस्य तद्ग्रहणे गृहीतमेव तत्, यद्येवं सर्वज्ञज्ञेयत्वमपि तस्यास्ति,—इति तस्यापि तद्ग्रहणे ग्रहणप्रसङ्गः। न, ग्रहणेऽपि अनिश्चयादिति चेत् न, क्षणिकत्वे निश्चयस्यापि असंभवादिति न किंचिदेतत्। अक्षणिकपक्षे तु नैष दोषः, इत्याह

**सामर्थ्यव्यञ्जिका सिद्धा**
**सामग्री सुस्थिरात्मनः।**

वह्न्यादिकारणसामग्री सुस्थिरा सती स्वात्मनः संबन्धिनो धूमादिकार्यजननसामर्थ्यस्य निश्चायिका सिद्धा, स्थिरायां सत्यां कार्यकारणतापरिच्छित्तिरुपपद्यते, न क्षणिकायामित्यर्थः ॥

एतदेव दर्शयति

**व्यक्तसामर्थ्यकं वस्तु**
**योग्यं कृत्यमपेक्ष्य तु ॥ ३९ ॥**

योग्यमक्षणिकमेव कार्यमपेक्ष्य कारणवस्तु अभिव्यक्तकारणसामर्थ्यं भवति ॥ ३९ ॥

**स्थैर्ये सन्मानसंसिद्धे**
**युगपत्क्रमशो यथा ।**
**दृष्टिस्तथाभ्यनुज्ञानं**
**सामग्रीवशतः क्रिया ॥ ४० ॥**

स्थिरतरेण प्रमाणेन स्थैर्ये सिद्धे सति क्वचिद्यथा नटमल्लप्रेक्षादौ युगपद्दर्शनं, गच्छतो विचित्राध्वविषयं च क्रमेणोपपद्यते तथा 'क्रमेणेदमिदं तु युगपत्कार्यम्' इत्यभ्यनुज्ञानम् । कारणसामग्रीविशेषबलाच्च क्वचिद्युगपदन्यत्र क्रमेणार्थक्रियाप्युपपद्यते, न तु क्षणिकस्य क्षणिकत्वादेव क्रमाभावात् । युगपदप्युत्पत्तेः प्रागसत्त्वादुत्पत्तिसमकालं चाभिन्नकालत्वेन कार्यासंभवादुत्पन्नस्य च नाशानन्तरितत्वादर्थक्रिया न संभवत्येव । ननु द्वितीयस्मिन् क्षणे नाशवत् कार्यं ततो भविष्यति,—इति । यद्येवं नाशानन्तरितत्वात् तदेव तदिति क्षणिकत्वासिद्धेः, तदन्तरितत्वे त्वभावादुत्पत्तिर्द्वितीयस्य घटादिक्षणस्येत्यहेतुकत्वात् नित्यं सत्त्वमसत्त्वं वा स्यात्,—

इत्युक्तम्, अतः क्षणिकस्य क्रमयौगपद्याभ्यामर्थक्रियायोगादवस्तुत्वप्रसङ्गः ॥ ४० ॥

किं च प्रमाणप्रमेयभावश्चात्र,—इत्याह

**न च मानं परस्यास्ति**
**स्वक्लृप्तार्थप्रसिद्धये।**

क्षणिकत्वे हि सर्वस्योत्पत्तिसमनन्तरमेव ध्वंसात् कस्य किं कुत्र प्रमाणमिति सर्वासिद्धिः ॥

ननु च तदुत्तरकालभाविविकल्पकल्पिता आनुमानिक्यैवेयं प्रमाणादिव्यवस्था। न, क्षणिकत्वेन तयोरप्ययोगादित्युक्तमभ्युपगम्यापि आह

**विकल्पादि विना नार्थं**
**लिङ्गं नाविषयत्वतः ॥ ४१ ॥**

अर्थं विना निरर्थकत्वेन भवद्भिरभ्युपगमात् नात्र विकल्पादि, आदिग्रहणादात्माध्यारोपरूपं क्लिष्टमपि च मनः प्रमाणम्। नाप्यनुमानं निर्विषयत्वेनैव तस्यापि परमार्थतोऽभ्युपगमात्, न चाविषयं मिथ्याज्ञानवद्व्यवस्थापकमुपपद्यते ॥ ४१ ॥

ननु

'सामान्यविषयं प्रोक्तं लिङ्गं भेदाप्रतिष्ठितेः।'

इत्युक्तत्वात् नास्माकं निर्विषयमनुमानमित्याह

सामान्यवति संबोध-
स्त्वदुक्तादक्षतोऽपि हि ।
स्मृतेर्निश्चयतश्चैत-
दन्यथा नोभयं तु तत् ॥ ४२ ॥

एवं तर्हि सामान्यस्य प्रमाणविषयत्वेन स्वलक्षणवत् सत्त्वप्रसङ्गात् त्वदुक्तादक्षतोऽपि इन्द्रियविज्ञानेनापि ग्रहणं स्यात् तथैव तदर्थस्य स्मरणात् 'अयं घटः' इति सामान्यविशेषात्मन एव निश्चयात्, अन्यथा स्वलक्षणस्यापि सत्त्वासिद्धेः, तदुभयमपि सामान्यविशेषात्मकं वस्तु नेति सर्वासिद्धिः । ततः सामान्यमपि सदभ्युपगन्तव्यम् ॥ ४२ ॥

किमत इत्याह

व्यक्त्यन्तरे ग्रहात्तस्य
व्यतिरेको विवक्षितः ।
तेन व्यक्तिविनाशेऽपि
तत्तावदवतिष्ठते ॥ ४३ ॥

तेन सामान्यत्वादेव व्यक्तिविनाशेऽपि तस्य व्यक्त्यन्तरे सतो ग्रहणात् तावत्स्थैर्यं सिद्धं न यावत् मषकादिसामान्यस्येव सर्वव्यक्तिविनाशो जातः,— इति 'च-

णिकाः सर्वसंस्काराः' इत्येतद्बाधितमेव ॥ ४३ ॥

ननु परमार्थतः कल्पितमेव सामान्यमित्याह

**विरहय्य न सामान्यं**
**व्यक्तिः पुंभोगसाधिका ।**

द्विविधं सुखादि वैषयिकमाभिमानिकं च संवेद्यते । तत्र पूर्वं शीतादिस्पर्शजन्यं स्वलक्षणहेतुकमेव सिद्धम्, उत्तरं त्वभिमानस्याध्यवसायरूपत्वेन पूर्वापरपरामर्शयोग्यार्थराज्यादिविषयं सिद्धम् । न च स्वलक्षणं तथाभूतं भवद्भिरिष्यते,—इति सामान्यहेतुकमेव, ततः सुखादिसाधकत्वात्स्वलक्षणवत् सामान्यस्यापि नावस्तुत्वम् । ननु तज्ज्ञानस्य तत्र हेतुत्वं न तस्येति चेत् न, स्वलक्षणविषयस्येव सामान्यविषयस्यापि ज्ञानस्यैव सुखाद्यवभासात्मकत्वात् स्वात्मनि क्रियाविरोधाच्च विषयस्यैव हेतुत्वमिति ॥

अधुना यैर्विनाशहेत्वसामर्थ्यवैयर्थ्याभ्यां क्षणिकत्वं साध्यते तान् प्रत्याह

**यतः कारणनाशादे-**
**भङ्गोऽर्थे न स्वभावतः ॥ ४४ ॥**

यतः पूर्वोक्तात् स्थैर्यात् प्रमाणसिद्धाद्धेतोः कारणस्य नाशेन नाशोऽर्थस्य यथा श्लेष्मादेर्नाशेन श्लै-

ष्मिकस्य व्याधेः । आदिग्रहणान्नाशहेतोः सः । क्वचिच्च कारणान्नाशस्तेन नाशहेतोः सद्भावात् यथा घटादेर्मुद्गरादिभ्यो न तु स्वभावादेव येन स्वभावस्याविशेषात् प्रागपि नाशसिद्धेः क्षणिकत्वं सिद्ध्येत् ॥ ४४ ॥

ननु नाशहेतवः किमव्यतिरिक्तं व्यतिरिक्तं वा तस्य नाशं कुर्वन्ति । अव्यतिरेके भाव एव विनाशः, स च स्वहेतुनैव कृत इति वैयर्थ्यं तेषाम् । व्यतिरेकेऽपि अवस्तु वस्तु वा नाशः,—इति वाच्यम् । तत्रावस्तुनोऽत्यन्तासत्त्वतः कर्तुमशक्यत्वादकिंचित्करत्वेनासामर्थ्यं तेषाम् । वस्तुत्वे तु घटस्यासौ पटादेरिवार्थान्तरत्वात् न नाशः, इति प्राग्वदुपलम्भप्रसङ्गः । ननु घटनाशात्मनस्तस्य कृतत्वात् नैष प्रसङ्गः । न, घटस्य न कृतो यतः । ननु ततोऽस्य विनाशो भविष्यति । न, तत्रापि स एव प्रसङ्गः,—इत्यनवस्था । तस्मादहेतुक एव विनाशोऽभ्युपगन्तव्यः, अहेतोश्च देशकालनियमायोगात् प्रतिक्षणं विनाशसिद्धिरिति । अत आह

**न चाप्यहेतुको नाशः**
**कदाचिद्भावतोऽर्थवत् ।**

न तावदहेतुको भावानां विनाशो मुद्गरादिहेत्वन्वयव्यतिरेकानुविधानाज्जन्मवत् । अत एव नावस्त्वसौ, अपितु कर्पराद्यात्मको वस्त्वेव । घटादेर्हि कर्पराद्यात्म-

ता नाशः प्रत्यक्षसिद्धो नान्यस्तस्यावस्तुत्वेन प्रमाणागोचरत्वात्। तदुक्तम्

'यथाहेः कुण्डलीभावो व्यग्राणां वा समग्रता।
तथैव जन्मनाशौ तु सतामेके प्रचक्षते॥'

इति। यद्येवं कार्यमेव विनाश उक्तः स्यात्। न, विकारित्वात्, कार्यं हि उदकधारणाद्यविकृतरूपस्यैव घटादेः सिद्धं, नाशस्तु रूपान्तरापत्तिलक्षणो विकारः। इदमेव प्रकृतिविकृतिभावं महामतयो मन्यन्ते। लोकोऽपि 'नष्टं क्षीरमम्लीभूतम्' इत्याह। ननु दध्युत्पादे क्षीरस्य किं जातं येन तन्नोपलभ्यते। बालभाषितमेतत् नाश एव, नष्टत्वान्नोपलभ्यते, तन्नाशात्मकं हि दधि,—इत्युक्तम्। ननु भावनिवृत्त्यात्मक एवाभावः 'नास्तीह घटः' इत्यादावपि तथादर्शनात्। सत्यम्, नाशस्तु न तदात्मकोऽपितु वस्त्वन्तररूपः प्रत्यक्षसिद्ध इत्युक्तं, भावनिवृत्तिमात्रं त्वभावोऽत्यन्तावस्तुत्वात् न प्रमाणविषयोऽपितु देशादिनियतपदार्थान्तरसंसर्गभ्रान्तिविवेकरूपो 'नास्तीह घटः' इत्यादौ व्यवहारमात्रफलो विकल्पकल्पित एव। यदुक्तं भवद्भिरेव

'रूपाभावादभावस्य शब्दरूपाभिधायिनः।
नाशङ्कया एव सिद्धास्ते व्यवच्छेदस्य वाचकाः॥'

इति। न तस्य कार्यता, अपितु अनर्थरूपस्यैवाभावस्येति

न विनाशहेतोरसामर्थ्यं वैयर्थ्यं वा दोष इति ॥

ये तु विनाशः स्वभाव एव भावस्य ततो विनाशस्वभावादेव भावो नश्यति नतु हेत्वन्तरात् तेनाप्यतत्स्वभावस्य नाशयितुमशक्यत्वात् अत एव च कृतकत्वानित्यत्वयोस्तादात्म्यादव्यभिचारः सिद्ध्यति नान्यथा । यदुक्तम्

'अहेतुत्वाद्विनाशस्य स्वभावादनुबन्धिता ।
सापेक्षाणां हि धर्माणां नावश्यंभावितेष्यते ॥'

इत्याहुस्तान् प्रत्याह

नाप्यर्थादपृथग्यस्मा-
दर्थवन्नोपलभ्यते ॥ ४५ ॥

यो हि अर्थस्वभावः स तस्मिन् निष्पन्ने निष्पन्न एव शिंशपात्व इव वृक्षत्वम् । यस्तु यन्निष्पत्तावनिष्पन्नो न स तत्स्वभावो गोत्व इव वृक्षत्वम् । न च अर्थनिष्पत्तौ तन्नाशो वस्तु अवस्तु वा तदात्मन्युपलभ्यतेऽत्यन्तविरुद्धत्वेन परस्परपरिहारेणावस्थानतस्तादात्म्यासंभवात् । यदुक्तमाचार्येण परमोक्षनिरासकारिकासु

'विरुद्धावेककालस्थौ धर्मावेकाश्रयं गतौ ।
इतरेतरनाशात्तौ कुरुतो लोपमात्मनः ॥'

इति, तन्निष्पत्तावनिष्पत्तेर्नार्थस्वभावो नाशः । ननु

द्वितीयस्मिन् क्षणे स तस्य भवति,—इति कथमस्वभावः अत एव कार्यवत्। ननु

'हेत्वन्तरानपेक्षित्वात्स स्वभावोऽनुवर्णितः।'

इति, तर्हि सांशयिक एष स्वभाव इति न ततो वस्तुसिद्धिरन्यथापि संभवतोऽनवस्थाप्रसङ्गात्,—इति कृतकत्वेन नाशस्य तादात्म्यप्रतिबन्धाभावादतादात्म्ये चावश्यंभावानभ्युपगमादननुमानं तद्विनाशयोग्यता कृतकस्य वस्तुनः स्वभावो न नाशस्ततो नैष दोष इति। यद्येवमसत्पक्ष एव ॥ ४५ ॥

न च व्यभिचारोऽनुमानस्येत्याह

**अभेदकारकं यद्व-**
**दर्थसिद्ध्यै प्रवर्तते।**
**तन्नाशाय तथैवेति**
**नाशो जातस्य जायते ॥ ४६ ॥**

यथैव सहकारिकारणं दण्डचक्रसूत्रादि घटादेरर्थस्य साधनाय प्रवर्तते तथैव तस्य कर्पराद्यात्मकनाशकरणाय मुद्गरादि सहकारिकारणं प्रवर्तते,—इति। यत् कृतकं तत् सहकारिसन्निधाववश्यं नश्यति, यस्तु न नश्यति नासौ कृतको यथात्मादिः,—इत्यन्वयव्यतिरेकस-

द्भावात् कृतकत्वेनानित्यत्वं शब्दादावनुमातुं युक्तं, न भवतां व्यतिरेकासंभवतः केवलान्वयिनोऽस्य गमकत्वासिद्धेः । ननु नश्वरस्वभावस्य किं मुद्गराद्यपेक्षा इति यदुक्तं तदयुक्तं मुद्गरादिसन्निधावेव तस्य रूपान्तरापत्तिस्वभावत्वात् । नन्वनुपकारिणोऽपेक्षायोगान्मुद्गराद्युपकारे तु स पूर्वः स्वभावत एव घटो नष्टोऽयमन्यस्तदुपकृतः समुत्पन्नः,—इति क्षणिक एव । न, तथास्वभावत्वादित्युक्तम् । स्वहेतोर्हि स तथाभूतस्वभावो भावो भवति यः सर्वदानुपकारकमुद्गरादिसन्निधौ विकारमुपयाति नान्यथा, इत्यत्र तथादर्शनमेव प्रमाणम् । न च स्वभावा भावानां पर्यनुयोगमर्हन्ति । एतेन तथाभूतसहकारिसन्निधावर्थक्रियाकरणस्वभावत्वात् स्थिरस्य क्रमेणार्थक्रियाविरोधः परिहार्यः । ननु सहकार्यसन्निधौ जनकाद्भिन्नस्तस्य स्वभावो जननाभावादेव । न, तदापि सहकारिसन्निधौ कार्यकारणस्वभावत्वात्, तत्सान्निधौ तु स एवेति न भेदः, नहि अस्मात् स्वभावात् कालत्रयेऽपि तस्यान्यथाभावः, सहकार्यसंनिधानात्तु न प्राक् कार्योद्भवः,—इति तत्संनिध्यसंनिधी परं भिद्येते न वस्तुभेदः । ननु सान्निध्यसान्निधी तर्हि सहकारिणो भेदं विदधाते विदधतोर्विरुद्धस्वभावत्वात् । न तत्रापि विरोधस्तस्यापि संनिधापकस्वसहकारिसंनिधौ तत्संनिधिस्वभावत्वात् तस्यापि स्वसहकारिसंनिधौ तस्य तस्यापि,

इति नानियमः स्वभावनियमितत्वाद्भावानां वैश्वरूप्यस्येति सहकारिणामपि क्षित्यादीनां बीजादिकारणसन्निधौ तत्कार्यकारणस्तु असौ तत्सदृश एव स्वभावो येन तत्संनिधान एव तदङ्कुरादिकार्यं कुर्वन्ति नान्यदा,—इति सर्वेषां तत्कारकत्वं स्वभावः परस्परसंनिधानापेक्षः,—इति सर्वे कारकाः सहकारिपदवाच्या नैकका: । न च तेषां स्वभावभेदः, सर्वेषां च सामर्थ्येऽपि न कार्यानेकत्वप्रसङ्गः परस्परसन्निधौ तदेककार्यनिर्वर्तकस्वभावत्वात् एवं नानाभूतार्थक्रियाकरणे नानाभूततत्तत्सहकारिसंनिधौ नानाभूतानेककार्यकर्त्रैकस्वभावत्वात्, क्रमेण नानाभूतार्थक्रियाकरणेऽपि न स्वभावभेदो यथैकस्यैव चैत्रस्य लवनपचनभोजनाद्यनेककार्यकर्तुस्तत्तद्दात्रादिसहकारिसंनिधौ तत्तल्लवनपचनादिकार्यकर्तृस्वभावत्वात् क्रमेण लवनपचनादिभावेऽपि न स्वभावभेदस्तथाभूतस्वभावस्य तत्राक्रमेणैव भावात् प्रदीप इव । प्रदीपस्य हि वर्तिदाहतैलक्षपणप्रकाशस्वज्ञानाद्यनेककार्यनिर्वर्तकः स्वभावोऽभ्युपगतो भवद्भिर्नतु कार्यभेदेन स्वभावभेदः,—इति दर्शितं प्रागेव, तद्वदत्रापि सहकारिसंनिधौ तत्कार्यकर्तृस्वभावावियोगात् सर्वदैव स्थिरस्य भावस्य । सहकारिसंनिधानस्य तु क्रमिकत्वात् क्रमेणानेककार्यनिर्वर्तनेऽपि न भेदस्तत्स्वभावाभेदात्, स्वरूपस्य तु भेदासिद्धौ हि नञर्थानुप्रवेशपर-

मास्ना बौद्धाः, न च सर्वदैकस्वभावधर्माच्छादितानां स भवति,— इति न स्थिरस्य क्रमयौगपद्याभ्यामर्थक्रियानुपपत्तिरिति ॥ ४६ ॥

नन्वकारण एव कारकान्तराद्वात्मादेरपि विनाशो भविष्यति,— इति व्यतिरेकासिद्धेर्युष्माकमप्यनैकान्तिकोऽयं हेतुरित्याह

**व्यतिरेकेऽपि विषयो**
**यस्तस्यासौ न जायते ।**
**विरोधित्वेन किं कुर्मो**
**दृष्टे बाधा न विद्यते ॥ ४७ ॥**

व्यतिरेकनिमित्तं यस्तस्य व्यतिरेकस्य विषय आत्मादिस्तस्य नाशो नोपपद्यते विरोधित्वादिति । अयमर्थः — यस्यैव यथा नाशेन सह विरोधः प्रमाणेन सिद्धस्तस्यैवासौ विरुद्धत्वात् शीतस्येव कारणान्तराद्भवदौष्ण्यमौष्ण्यस्य वा शीतं निवर्तकमनुमीयते , यदुक्तं भवद्भिरपि 'अविकलकारणस्य भवतोऽन्यभावेऽभावाद्विरोधगतिः' इति, नाविरुद्धस्य । कारणाच्च घटादेरुत्पत्तिमतश्च हेतुमता नाशेन सह विरोधः प्रत्यक्षेण सिद्धः, इति तथाभूतस्यैवासावनुमानेन संभावयितुं युक्तो

---

१ ग० पु० कारकान्तरात्मादेरपीति पाठः ।

नानुत्पत्तिमतोऽहेतुकश्चात्मादेः । नहि प्रत्यक्षदृष्टस्य क्वचिदन्यथात्वं युक्तं धूमादीनामपि देशान्तरेऽनग्नितोऽपि भावसंभावनया सर्वानुमानाभावप्रसङ्गात् । अथ नातद्भाविनः सकृदपि ततोऽभावात्, इति वस्तु व्यवस्थितमित्युच्यते, तर्हि अकृतकस्यात्मादेरहेतुकनाशकल्पना कल्पनामात्रमेव, अतो व्यतिरेकोऽस्य सिद्धः, इति नानैकान्तिकता ॥ ४७ ॥

एतदेव दर्शयति

विनाशहेतुः सद्भाव-
व्याप्ते सर्वत्र वस्तुनि ।
कृतकत्वमानित्यत्वं
नातो व्यभिचरिष्यति ॥ ४८ ॥

सतो भाव उत्पादस्तेन व्याप्ते सर्वस्मिन्नुत्पत्तिमति वस्तुनि विनाशहेतुः शीतस्येवौष्ण्यं यतो वास्तवेन प्रतिबन्धेन सर्वत्र सर्वदा व्यापकत्वेन सिध्यति ततः कृतकत्वाख्यो हेतुः शब्दादौ धर्मिण्यनित्यत्वं साधयत्येव न त्वनैकान्तिकः । यदाहुः

'अवश्यंभावनियमः कः परस्यान्यथा परैः ।
अर्थान्तरनिमित्ते वा धर्मे वाससि रागवत् ॥'

इति । यतो न वासस्यपि रागोऽनुमीयतेऽपितु रागयोग्यता,—इत्यव्यभिचार एव । यद्येवं कृतकः कश्चिन्न

विनश्येदपि । न, अत एव महाप्रलयसिद्धेः । अपि च नाशयोग्यतास्य साध्या न नाशः, इत्युक्तं तस्याश्चा- व्यभिचार एव । यथा हि बीजस्याङ्कुरजननयोग्यतानुमा- नेऽपि कदाचित् काकादिभक्षणादङ्कुरजननाभावेऽपि अ- नुमानमदुष्टमेव घटादिवदत्यन्तायोग्यत्वनिराकरणफलत्वा- त् तस्य, तथेहात्मादिवदत्यन्तनाशायोग्यत्वनिराकरणाय घटादेरर्थस्य नाशयोग्यतानुमीयते; अत एव चार्थरक्षा- दौ नीतिशास्त्राणां प्रवृत्तिर्नयविदश्च निपुणा दृश्यन्ते ना- न्यथेत्यदोषः ॥ ४८ ॥

तदेवं ग्राहकात्मनोऽपि क्षणिकत्वासिद्धेरैहिकफलवि- षयतयापि प्रवृत्तिफलभोक्तृत्वं प्रतिज्ञासूत्रपदोपात्तं व्या- ख्यातम् । अधुना 'यः पुमान्' इति पदद्वयं व्याख्यातुं यैः 'इन्द्रियसङ्घ एव चेतनो नान्यः कश्चित् पुरुषो नाम त- त्रैवाहंप्रत्ययस्य दृष्टेः' इत्युच्यते तान् प्रत्याह

कान्तायामिव बोद्धव्यो
बोधोऽहमिति वै तनौ ।
जानात्येव पुमान्यस्मा-
दियं मे [1]भोगसाधिका ॥ ४९ ॥

चैतन्यं तावत् स्वसाक्षिकमनुभवसिद्धमित्युक्तं, यदि च

१ क० पु० बोधेति पाठः ।

सैवेन्द्रियसंहतिरूपा तनुः, इत्युच्यते । भवतु नामान्तरमेव तत् ततो नार्थान्तरं, न च नाम्नि विवादो विदुषाम् । अथ रूपादिसंवित्त्यन्यथानुपपत्त्या चेतनेन स्वात्मनः करणतया यश्चक्षुरादिसमूहोऽनुमीयते सेन्द्रियसंहतिः, इत्युच्यते तदा करणत्वेनैव तस्याः सिद्धेर्न चेतनात्मककर्तृरूपत्वेन प्राक्प्रदर्शिताहंप्रत्ययविषयता युक्ता अत्यन्तभेदात् । ननु 'हन्त्यात्मानमात्मना' इतिवत् अभिन्नेऽपि कल्पितोऽत्र कर्तृकरणादिभेदो भविष्यति, इति । सत्यं यद्यभेदश्चैतन्येनास्याः सिद्धो भवेत् प्रोक्तानुमानेन तु भेद एव सिद्धः, इत्ययुक्तमेतत् । ननु

'अहं चक्षुरहं श्रोत्रं सर्वेन्द्रियतनुस्त्वहम् ।'

इत्यादिश्रुतिसिद्धोऽत्राभेदो भविष्यति इति ।

'अहं जाया ह्यहं पुत्रोऽहं गौरश्वा धनान्यहम् ।'

इतिवत् प्रत्यक्षादिविरोधाद्गौणत्वेनाप्यागमस्योपपत्तेरिन्द्रियचैतनिकपक्षोऽत्यन्तायुक्त एव ॥ ४९ ॥

भूतचैतनिकपक्षेऽप्याह

**भिन्नलक्ष्मा तु चिद्भावः**
**क्ष्मादेर्नाप्यचितेर्नहि ।**
**यद्दृष्टेर्विमतिः क्ष्मादेः**
**पूर्वव्यक्तेः स्वसंस्थितः ॥ ५० ॥**

चिदात्मको भावश्चिद्रूपोऽर्थो नाचेतनस्य पृथिव्यादेः स्वभावो युक्तस्ततो भिन्नलक्षणो यतः । एतदुक्तं भवति—चेतनाचेतनयोः परस्परपरिहारस्थिरलक्षणत्वाद्घटतदभावयोरिव नैकत्वम् । किंच यत् यस्मात् पृथिव्यादेः संबन्धिनी या दृष्टिः पृथिव्यादिविषयं प्रत्यक्षं ज्ञानं तस्याः सकाशाच्चिद्भावस्य विमतिः सत्तासंशयो दृश्यते ततस्तयोर्नैकत्वम् ; यो हि यदात्मकः स तन्निश्चयेन निश्चित एव यथा घटनिश्चये मृदादिः । यस्तु यन्निश्चये विमत्यधिकरणापन्नो नासौ तदात्मको यथा घटनिश्चये पिशाचः , शरीराकारपृथिव्यादिनिश्चये च संदिग्धश्चिद्रूपोऽर्थः ,—इति न तदात्मकः । न चायमसिद्धो हेतुः कायवाग्व्यवहारात्मनानुमानेन परचित्स्वभावः सिद्धः , यतः स चित्स्वभावोऽपि उक्तनयेन ग्राहकतया पूर्वा प्रत्यग्रूपा यासौ तस्य व्यक्तिः प्रकाशस्ततः स्वत आत्मनैव ग्राह्यस्वभावात् पुरोरूपात् स्वशरीरात्मनः पृथिव्यादेर्भेदेन संस्थितः धारणादिवृत्त्युपलक्षितात् स्वशरीराकारात् पृथिव्यादिभूतपञ्चकाद्ग्राह्यात्मनोऽत्यन्तविलक्षणस्तद्ग्राहकरूपोऽयमर्थः स्वतःसिद्धो यतोऽतो न भूतस्वभाव इत्यर्थः । अत एव लोकायतप्रतिक्षेपेणास्यागतार्थता । तत्र हि भूतकार्यत्वेनानित्यत्वं प्रतिक्षिप्तम् , अत्र भूतवन्नित्यत्वेऽपि तदात्मत्वमिति भेदः ॥ ५० ॥

अन्तःकरणचैतनिकाः साङ्कर्षणपाञ्चरात्रास्तु आहुः—कल्पयित्वापि पुरुषं भवद्भिर्धर्मज्ञानादिधर्माष्टकयुक्तमन्तः-

करणमभ्युपगतमेव तदन्तःकरणमेवोभयवादिसिद्धं ज्ञानरूपमात्मत्वेनेष्यतां, तद्व्यतिरिक्तस्याज्ञानरूपस्यात्मत्वासिद्धेर्ज्ञानात्मत्वे च ज्ञानद्वयानुभवप्रसङ्गतः प्रत्यक्षविरोधः, इति । तान्प्रत्याह

आचैतन्यान्न विज्ञानं
करणेऽन्तर्व्यवस्थिते ।

भवेदेतत् यद्यन्तःकरणमपि चेतनमस्माभिरभ्युपगतं स्यात् तत्तु कार्यत्वाद्घटादिवदचेतनमेव, न च कार्यत्वमसिद्धम् । भवद्भिरपि महाविभूतिकार्यत्वेन तस्याभ्युपगमात् । अथ तस्मादन्यदेव तन्नित्यमित्युच्यते, तर्ह्यात्मेवासौ सिद्ध इति नान्तःकरणचैतन्यवादः ।

कथं तर्ह्यन्तःकरणस्य ज्ञानं धर्मो भवद्भिरुक्त इत्याह

चैतन्यव्यक्तिभूमित्वा-
त्तद्वृत्तिर्ज्ञानमुच्यते ॥ ५१ ॥

ज्ञायतेऽनया स्मृतिप्रतिभासादावसन्निहितोऽर्थः पुरुषेणेति कृत्वान्तःकरणवृत्तिरुपचाराज्ज्ञानमुच्यते न तु मुख्यतः । बोधात्मनोऽपरिणामित्वेन संस्कारासंभवतस्तदानीमर्थासंभवाच्चानुभूयमानाकारानुपपत्तेरन्तःकरणमेव संस्काराकाररूपमभ्युपगन्तव्यं यतः, एवं धर्मादिरूपत्वमप्यन्तःकरणस्य तत्संस्काररूपतया नतु ज्योतिष्टोमादिक्रियात्मकधर्मादिरूपत्वेनेति विपश्चितमस्माभिः स्वा-

यम्भुवोद्द्योते तत एवावधार्यम् , इत्यन्तःकरणस्य धर्मादिवतो ज्ञानानभ्युपगमात् पुरुष एव ज्ञानात्मकः सिद्ध इति ‘ यः पुमान् ’ इति पदद्वयं व्याख्यातम् ॥

प्रागभेदसिद्धौ पुंसः प्रमाणं नास्तीत्युक्तमधुना तु भेदसिद्धौ प्रमाणमाह

**एकस्मिन्नेव काले यत्**
**प्रतिलिङ्गं सुखादयः ।**
**विभिन्ना उपलभ्यन्ते**
**तेनाणुर्भिन्न इष्यते ॥ ५२ ॥**

स्वसंवेदनेन हि प्रतिशरीरं स्वात्मा सुखाद्यनुभवितृत्वेन परशरीरचेष्टादिभिश्च दुःखादियुक्तात्मान्तरानुमातृकत्वेन युगपदेव संवेद्यते , न चानुमेयोऽनुमातानुमाता वानुमेय एव युगपदेव संभवत्यत्यन्तभेदादित्युक्तम् । अतस्तयोर्भेद एव युक्तः । न च परात्मानुमातृत्वं तदानीमसिद्धमसत्यं वा युज्यते वक्तुं स्वसंवेदनसिद्धत्वात्सुखादिप्रकाशकत्ववत् । नापि तदालम्बनोऽसावसत्यो बाधकाभावात्सुखादिवदित्यात्मभेदः सत्य एव ॥ ५२ ॥

अत्र वेदान्तविदः परस्याभिप्रायमाह

**नाणुभेदः सुखादीनां**
**किन्तु साधनभेदतः ।**
**भेदश्चेत्**

प्रतिशरीरमेकत्वेऽपि आत्मनो यथा ग्रीष्मातपदह्यमानवपुषोऽकस्मात्संप्राप्तशीततरजलनिमग्नाधःकायस्य युगपदेवातपजलादिसाधनभेदादूर्ध्वाधोभाविनोः सुखदुःखयोः संवेदनमेवं शरीरभेदेऽपि तस्य भविष्यतीति ॥

अत्रोत्तरमाह

सर्वदुःखादा-
वेका संविद्भवेत्ततः ॥ ५३ ॥

यथा प्रतिशरीरमेकत्वादात्मनोऽनेकसुखदुःखादिविषयमेव संवेदनं संवेद्यते, तथा यदि सर्वशरीरेष्वेक एवात्मा स्यात्ततः सर्वसुखदुःखादिविषयमेकमेव संवेदनं स्यात् तद्रूपत्वादेवात्मनः,—इति सर्वस्य सर्वज्ञत्वप्रसङ्गः परस्परं भेदाभावात्। सत्यमेकैव संवित् भ्रान्तिनिबन्धनस्तु भेद इति चेत्। न, असिद्धत्वात्। ननु स्वप्नादावस्याः सिद्ध एव तन्निबन्धनो भेदः। यदुक्तम्

'न चेत्स्यात्स्वप्नपुरुषो भ्रमस्यास्य निदर्शनम्।
सत्यं तदन्यरूपेण प्रतिभातीति को वदेत्॥'

इति। न, तत्रापि संविदः स्वात्मनि भ्रमाभावाज्जाग्रतीव प्रतिशरीरं सुखादिसंविद्भ्यो भेदः सत्य एव। भ्रान्तं हि विज्ञानं सर्वमालम्बने भ्रान्तं, न स्वात्मनि। आलम्बनं ह्यन्यथा बहिःस्थितमन्यथा प्रतीयमानं

भ्रमविषयतामापद्यते । यत्पुनर्बोधैकस्वभावं वस्तु तद्यथैव चकास्ति तथैव सदतत्स्वभावस्यासंवेद्यत्वात् स्वसंवेद्यत्वे च तत्स्वभावत्वमिति स्वशरीरवर्तिन एव सुखादिवेदनस्याभेदः, नतु परशरीरवर्तिनोऽनुमानसिद्धस्यानुमातृतयैव ततो भेदेन संवेदनादित्यात्मभेदः सत्य एवेत्युक्तम् । नन्वितरेतराभावसव्यपेक्षत्वाद्भेदस्याभावाविषयत्वाच्च प्रत्यक्षस्य न भेदः स्वसंवित्प्रत्यक्षगम्यः । तदुक्तम्

'आहुर्विधातृ प्रत्यक्षं न निषेद्धृ विपश्चितः ।'

इति । नेतरेतराभावसव्यपेक्षो भेदः, किं तर्हि सिद्धे भेदे तदितरेतराभावसिद्धिः । सर्वैक्ये हि न कस्यचित् कुतश्चिदभाव इति घटार्थी पटदर्शनात् किमिति निवर्तते, प्रमाणाप्रमाणविभागश्च न स्यात् सर्वस्य सत्तामात्राव्यभिचारात्,—इति स्वसंवेदनेन परात्मानुमातृतया स्वात्मा भेदेन प्रकाशमानः सत्य एव नहि स्वसंवित्तिसिद्धमवस्तु अपरवेद्यत्वात् ब्रह्मवत्,—इति भिन्ना एवात्मान इति सिद्धम् ॥ ५३ ॥

परिणतिवेदान्तविदः संहितापाञ्चरात्राश्चाहुः—सत्यं भिन्ना एव जीवात्मानः, ते तु परमकारणादनश्वराद् ब्रह्मपदवाच्यात्, यदि वा नारायणाख्यात् अव्यापका एव घटादिवत् स्वकारणलयस्वभावाश्चोत्पद्यन्ते,—इति । तान-

१ ख० पु० णतेति पाठः ।

पि अनुमानेन प्रतिक्षिपन्नाह

चैतन्यादेव पुरुषो
न विकारी न चाविभुः।
नियमेनाविभुर्यस्मा-
द्विकारी चाप्यचेतनः॥ ५३॥

यश्चेतनो नासावव्यापको लयस्वभावो वा तद्यथा परमकारणम्, यस्तु अव्यापको लयस्वभावश्च नासौ चेतनो यथा घटादिः, चेतनश्च जीवाख्यप्राणसंयुक्तोऽयमात्मा स्वसंवेदनासिद्धो भवद्भिरभ्युपगतः, इति नाव्यापको लयस्वभावश्च युक्तः, अपितु नित्यव्यापकस्वभाव एव, दिक्कालयोर्ग्रहीतृत्वेन तदवच्छिन्नतया सर्वदैवावभासनाच्च। नहि ग्राह्येण घटादिना ग्राहकोऽवच्छेत्तुं शक्य इत्युक्तम्। न च दिक्कालयोरपि ग्राह्यतां मुक्त्वान्यो ग्राहकैकस्वभावेनात्मना संबन्धः संभवति। तदिदमुक्तम्

'अनवच्छिन्नसद्भावं वस्तु यद्देशकालतः।
तन्नित्यं विभु चेच्छन्तीत्यात्मनो विभुनित्यते॥'

इति। नन्वेवं व्यापकतयात्मनो 'दूरेऽयमर्थः' इति प्रत्ययो न स्यात्, न च शरीरापेक्षयेति वाच्यं तस्याप्रमातृत्वात्, अत्यल्पमिदमुच्यते सर्वसर्वज्ञताप्रसङ्ग एव वाच्यः। न, सूर्यातपादेर्मेघादिवद्बोधस्यावरणसंभवात्। यद्येवं

कार्यकरणादिभिः स्वस्थान एव तद्व्युदासात्तस्याभिव्यक्तिरित्यभिव्यक्त्यपेक्षया दूरत्वादूरत्वप्रतिभासोऽप्युपपद्यत एव इत्यदोषः ॥ ५४ ॥

यदपि अव्यापको लयस्वभावश्चायमात्मा सर्वार्थदर्शनासत्त्वादसर्वज्ञत्वात् घटादिवत्, इत्यत्रानुमानं भवद्भिरुपन्यस्तं तदप्ययुक्तमित्याह

व्यतिरेकस्य संहेता-
वन्वयव्यतिरेकिणि ।
सर्वार्थदर्शनासत्वा-
त्सन्दिग्धमुभयं तव ॥ ५५ ॥

अन्वयव्यतिरेकवति सम्यग्हेतौ सर्वार्थदर्शनासत्त्वात्, इत्यस्मिन्नभिमते भवतां परं प्रति वैधर्म्यदृष्टान्तस्य परमकारणस्यासिद्धेः, ईश्वरमुक्तानां नित्यव्यापकस्वभावत्वेन स्वयमनभ्युपगमात् सान्दिग्धो व्यतिरेकः। तस्मिंश्च सान्दिग्धे संबन्धिरूपत्वात् पूर्वापरवदन्वयस्यापि सन्देहात्, 'गोमान् अश्ववत्त्वात्' इत्यादाविवानैकान्तिकता,—इत्यहेतुता; योऽपि कैश्चित् जीवात्मनामव्यापकत्वे लयस्वभावत्वे च सति आदिनान्वितत्वात् घटादिवदिति हेतुरुक्तः सोऽप्यासिद्ध एवात्मनामन्वयासिद्धेः। अन्वयो हि ग्राह्यस्य कर्मतामापन्नस्य ग्रहीतुं शक्यः, नचात्मा स्वात्मन एव ग्राह्यीभवति स्वात्मनि क्रियाविरोधात्, स हि ग्राहकत्वेनैव प्रत्य-

ग्रूपतया सर्वदा भासते,–इत्युक्तम् । ननु तेनैव रूपेणास्या-न्वयोऽपि भविष्यतीति । न, तस्यानेकग्राहकप्रकाशविषयत्वात्, न चैकैकात्मसंवेदने ग्राहकान्तरसंवेदनं संभवति तस्य ततोऽन्यत्वेन घटादिवत् परत्वात्, नहि आत्मनां परस्परं स्वसंवेदनमात्राः संकीर्यन्ते सर्वस्य सर्वज्ञत्वप्रसङ्गात्,–इत्युक्तम् । प्रत्येकं च स्वात्मवेदने कस्य कुत्रान्वयः । यद्येवं सर्वज्ञः सर्वात्मनां ग्राह्यत्वादन्वयं ग्रहीष्यतीति, तदप्ययुक्तम्, सर्वज्ञात्मनैव व्यभिचारात् । सोऽपि स्वसंवेदनेन परात्मभ्यो भेदेनैव तद्ग्रहीतृतया भासते यतः, न च ग्रहीतरि अन्वयः संभवतीत्युक्तम् । न च तस्य सर्वज्ञत्वादेव विपरीतग्रहणं संभवति, तद्यथा तेनात्मान्तरेभ्यः स्वात्मा अत्यन्तानन्वितरूपोऽसंभवत्क्रमेण प्रत्यक्षेण गृहीतस्तथैव परात्मानः परस्परभिन्नाः समन्वयविषयभावमतिक्रम्य वर्तमानास्तेन साक्षात्क्रियन्ते,–इत्यदोषः । अत एवानुमेयोऽपि आत्मनामन्वयो न संभवति तदानीमनुमेयात् अनुमातुरनुमातृरूपतया वैसादृश्येनैव भासनात् स्वात्मवत् परात्मनामत्यन्तविसदृशतयैवानुमानात्, तर्हि असन्नात्मा सत्तयानन्वितत्वादश्वविषाणवत् नास्य सत्त्वान्वयात् सत्त्वम् अपितु स्वरूपसत्त्वात् सत्तावत् परमकारणवद्वा, तस्यापि हि सत्त्वान्वयात्कार्यत्वेन परमकारणत्वाभावः । कथं तर्हि अन्वयाभावे सर्वात्मस्वात्मपदस्य प्रवृत्तिः । सादृश्यात् ब्रह्मणीव परात्मशब्द-

स्य । ननु तदपि अग्राह्यस्वभावे स्वात्मनि नैव ग्रहीतुं शक्यम् । सत्यम्, वैसादृश्यपरिहारेण तु कथञ्चिदद्‌रविप्रकर्षेण व्यवहारार्थं तत् तत्रोच्यते न परमार्थतः । यत् श्रूयते "नेति नेत्यात्मगतिः" इति दर्शितमस्माभिर्विस्तरेण रौरववृत्तिविवेकपरमोक्षनिरासकारिकासु, इति तत एवावधार्यम् । तदेवमन्वयाख्यस्यास्य हेतोरसिद्धेर्नाव्यापकत्वं लयस्वभावत्वं चात्मनामनुमातुं युक्तम्, इत्युक्तयुक्त्या नित्यव्यापकस्वभावा एव तेऽभ्युपगन्तव्या इति । यद्येवं सर्वशरीरेषु सर्वात्मनां सन्निधानाद्भोगसङ्करः । न, कर्मभिर्नियमितत्वात् । ननु तेषामपि स एव दोषः । न, कर्तृभेदेन भेदात् कर्तृत्वं हि चिकीर्षायोगात् प्रत्यात्मं भिद्यते, नान्यचिकीर्षया अन्यचिकीर्षावानुपपद्यते यतः, चिकीर्षयैव च तेषां कर्तृत्वमिति वक्ष्यामः ॥ ५५ ॥

अधुना साङ्ख्यं प्रति कर्तृत्वमात्मनः साधयितुमाह

कृतं मया करोमीदं
करिष्यामीति बोधतः ।
वेदप्रामाण्यतश्चाणोः
कर्तृशक्तिस्त्रिकालगा ॥ ५६ ॥

कर्तृत्वं तावदिदं सर्वान्यकारकप्रवृत्तिनिवृत्तिहेतुत्वेन स्वा-

तन्त्र्यात्मकं शरीरेन्द्रियस्पन्दं प्राणादिप्रयत्नं च विदधत् सर्वमेव कृष्यग्निहोत्रादिदृष्टादृष्टफलं कर्म कुर्वदनुभूयमानमात्मनो 'न विद्यते' इति न शक्यते वक्तुम्, शरीरादिकारकान्तरप्रेरकत्वेन प्रत्यग्रूपतयाध्यात्मं ज्ञातृत्ववदनुभवात्। नहि ज्ञातृत्वस्याध्यात्मस्वभावत्वेऽन्यदतः कारणमस्तीत्युक्तम्, 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति विशिष्टाधिकारिकर्तव्यतोपदेशकत्वेन श्रुतेर्भवद्भिरपि प्रमाणत्वेनाभ्युपगमात्। न चाकर्तुः पाषाणतुल्यस्य कार्यतोपदेशः प्रमाणतामासादयति, तत्प्रमाणान्यथानुपपत्त्यापि च नाविद्यमानं पुंसः कर्तृत्वमिति शक्यं वक्तुम्। विद्यमानं च तन्नित्यात्मस्वभावत्वात्, कृतं मयेत्यादि सर्वकालगतत्वेन च परामर्शविषयत्वात् ज्ञातृत्ववत् नित्यमभ्युपगन्तव्यम्। ननु प्रकृतेरेव कर्तृत्वं तदविवेकात्तु आत्मनि तदध्यारोपः, इति सांख्याः। यद्येवं ज्ञातृत्वमपि तस्या एव इति कृतं व्यतिरिक्तात्मवादेन। ननु प्रकृतेरस्याः कार्यकारणादिरूपायाः सर्वदैव ज्ञेयत्वेन सिद्धेः ज्ञातृत्वं नोपपद्यत एव। यद्येवं कार्यत्वेनास्यास्तथैव सिद्धेः कर्तृत्वमपि नोपपद्यते। न, स्वकार्यविषयस्य प्रकृतेः कर्तृत्वस्याभ्युपगमात्। यदुक्तम्

'प्रकृतेर्महांस्ततोऽहङ्कारः' (सां० का० २२)

इति। न, जडत्वेनोपादानकारणत्वं तत्र तस्या न क-

र्तृत्वम्, अन्यत् हि उपादानकारणत्वं स्वरूपान्यथाभावरूपं जडवस्तुस्वभावतयैव परिणामित्वाद्यव्यभिचारि-क्षीरदध्यादिष्वध्यक्षसिद्धम्, अन्यच्च कर्तृत्वं हिताहितप्राप्तित्यागफललिप्सया सर्वान्यकारकप्रवृत्तिनिवृत्तिकारणत्वेन स्वातन्त्र्यात्मकं चिद्वस्त्वव्यभिचारि स्वसंवेदनसिद्धमिति कर्तृत्वस्यापि तत्रासिद्धेर्ज्ञातृत्वस्येव आत्मधर्मतैवेति । यदुक्तम्

'प्रवृत्तौ च निवृत्तौ च कारकाणां य ईश्वरः ।
अप्रवृत्तः प्रवृत्तो वा स कर्ता नाम कारकः ॥'

इति । ननु कर्तृत्वस्याबोधरूपत्वेन स्वसंवेद्यत्वासिद्धेः घटादेरिव नात्मधर्मता, यद्येवं नित्यत्वव्यापकत्वादेरपि तद्धर्मत्वेन सिद्धस्यैष प्रसङ्गः समानः, इति नैरात्म्यम् । न, तस्य सवितृप्रकाशादिवत् तस्मादभेदेनैव सिद्धेरिति चेत् तर्हि दाहकत्वमिव सवितृप्रकाशात् बोधात्मनः कर्तृत्वमविभिन्नमेव स्वसंवेदनसिद्धमिति नातत्स्वभावम् । तदुक्तं मोक्षकारिकासु

'सर्वज्ञानक्रियारूपा शक्तिरेकैव शूलिनः ।
क्रिया त्रिधा तु वामाद्या गीता व्यापारभेदतः ॥'

इति ॥ ५६ ॥

अपि च

**स्याताां बीजैककर्तृत्वे**
**कृतनाशाकृतागमौ ।**

जगदुपादानकारणस्य[1] प्रकृत्यात्मन एवैकस्य कर्तृत्वे पाकादिव्यापारेण 'इदमोदनादि कृतं मया' इत्यात्मगतत्वेन कर्तृत्वतत्परामर्शयोरभावप्रसङ्गः स्यात् अकृतस्यैव चौदनादेः कुतश्चिदैन्द्रजालिकोपनीतस्येवागमः, इति सर्वस्य सर्वदा सर्वत्र प्रतिपत्तिः स्यात् ततो दृष्टेऽपि कर्मफले प्रत्यभिज्ञाभावप्रसङ्गतोऽनुभवविरोधः ॥

अत्र पराभिप्रायमाह

**परिणामप्रसङ्गश्चेत्**

पुंसः कर्तृत्वे परिणामिता स्पन्दात्मकत्वात् कर्तृत्वस्य ॥

एतत् प्रतिक्षिपति

**न मण्यादावदर्शनात् ॥ ५७ ॥**

न स्पन्दात्मकं कर्तृत्वं क्रियारूपत्वात् स्पन्दस्य, न च क्रियारूपं कर्तुः अपितु तत्र शक्तत्वमयस्कान्तमणेरिवायःस्पन्दजनन इत्युक्तमस्माभिरन्यत्र

'जडस्पन्दक्रियायां या शक्तिः सा कर्तृतात्मनः ।
व्याप्तेरस्पन्दरूपेण सिद्धायस्कान्तवत्स्वतः ॥'

---

१ ख० पु० दुत्पादन इति पाठः ।

इति। ननु जडत्वान्मण्यादीनां कर्तृत्वमपरिणामित्वं चासिद्धमेव। सत्यम्, शक्तत्वेनैव कारकत्वं न स्पन्दात्मकत्वेन,—इत्येतावन्मात्रत्वात् अत्रोपक्षेपस्यादोषः। तदेवं 'कर्ता च' इत्येतदपि प्रतिज्ञापदं व्याख्यातमिति ॥ ५७॥

तदियता यथाप्रतिज्ञातस्यात्मनो दर्शनान्तरनिराकरणेन सम्यक् परीक्षां विधायाधुना युक्तिमपि तथा परीक्षितुं यैर्मुक्तौ शिवसमत्वश्रुत्यन्यथानुपपत्त्यास्यात्मनः सर्वज्ञत्वाद्युपपद्यते,—इत्युच्यते तान्प्रतिक्षिपति

**ज्ञातं मया विजानामि**
**ज्ञास्यामीति प्रबोधतः।**
**त्रिकालविषया पुंसो**
**बोधशक्तिस्तदापि सा ॥ ५८ ॥**

यद्यत्र नास्ति तत्तत्रोत्पद्येतापि आमलकादाविव पश्चात्पीतत्वम्, अस्ति च पुंसस्त्रिकालविषयं ज्ञत्वादि प्रागपीति न तत्तदोत्पद्यते तदेव तु सर्वज्ञत्वमिति उत्पत्तिमत्त्वे च घटादेरिवानित्यत्वात् मुक्तेरनिर्मोक्षः ॥ ५८ ॥

ननु सर्वविषयं ज्ञानमधुनानुपलभ्यमानत्वात्तदोत्पत्स्यते, इत्याह

**ज्ञानशक्तिस्तु चिच्छक्तिः**
**सा व्यक्ता ज्ञानमुच्यते।**

व्यक्तिरावरणापाये
पुंशक्त्योरर्थसंगमः ॥ ५९ ॥

ज्ञानशक्तिरेव चिच्छक्तिः, सा च वक्ष्यमाणस्याविद्याद्यावरणस्यापायेऽर्थप्रकाशनप्रवृत्तौ ज्ञानमुच्यते, नतु ज्ञानतच्छक्त्योर्भेदः सर्वदैकरूपेण ग्राहकात्मनः संवेदनात् नार्थभेदेन भेद इत्युक्तमतो न तस्योत्पादस्तदेति ॥ ५९ ॥

कस्तर्हि बद्धाबद्धावस्थयोर्विशेषस्तस्या इत्याह

भवे पाशोपरक्ता सा
मुक्तौ पाशाभिभाविका।
नियतार्था भवे मुक्तौ
सर्वार्था व्यञ्जकाश्रयात् ॥ ६० ॥

चक्षुषस्तमोलक्षणस्येवावरणस्य सद्भावासद्भावकृतो विशेषोऽस्याः विषयाल्पत्वमहत्त्वात्मकोऽपि इदानीं कलादेर्मुक्तौ ईश्वरात्मनश्च व्यञ्जकस्याल्पत्वमहत्त्वकृतो नतु स्वरूपभेदकृत इति मुक्तौ ज्ञानक्रिययोः सर्वविषयत्वस्याभिव्यक्तेरीश्वरसमत्वं नतु उत्पत्तेरिति ॥ ६० ॥

अथ त्रिकालविषयमेव चैतन्यं पुंसः प्राङ्गेष्यत इति, तत्राप्याह

त्रिकालविषयं पुंस-
श्चैतन्यं यदि नेष्यते।

कालादेरिव[1] भेदस्तु
ततस्तस्य प्रसज्यते ॥ ६१ ॥

सर्वस्यास्य मेयराशेः कालत्रयेण व्याप्तत्वात् तस्य च पूर्वापरादेरिव संबन्धिरूपत्वेनान्यतराग्रहणे ग्रहणासंभवात् तद्व्याप्यस्यापि अस्य मेयस्यासिद्धेः कालकलादेर्मायीयस्येव अज्ञत्वं पुंस इत्यवश्यं त्रिकालविषयं प्रागपि तस्य चैतन्यमभ्युपगन्तव्यम् । ततो मुक्तौ तस्याभिव्यक्तिरेव युक्ता नोत्पत्तिरिति ॥ ६१ ॥

पाशुपतास्तु मुक्तस्येश्वरगुणसंक्रान्तेस्तत्समत्वमाहुः, अन्ये पुनरीश्वरगुणावेशाद्भूताविष्टपुरुषवदिति । तान्प्रत्याह

विशेषः शक्तितश्चेति
नान्योऽसौ पतिशक्तितः ।
क्रियाशक्तिर्यतोऽर्थानां
दृष्टा या चिद्वतामपि ॥ ६२ ॥

प्रोक्तनयेन मुक्तस्यायं सर्वज्ञत्वादिलक्षणो विशेषः परमेश्वरशक्तिभ्य इत्ययमपि पक्षो न युक्तः येनान्योऽसौ आत्मा ताभिः शक्तिभिर्भिन्नचेतनत्वेन पूर्वसिद्धेः ॥ ६२ ॥

क्रियाशक्तिस्तस्यापीत्युक्तं किमत इत्याह

---

१ कालादेरिव दोषस्तु इति पाठः । ग० पु० शेषस्तु इति पाठः ।

संज्ञानं भवतोऽप्यन्त-
स्तत्त्वसंज्ञमनश्वरम् ।
संस्कृतेः प्रतिपक्षः स्या-
त्संविदश्चाप्यसंभवात् ॥ ६३ ॥

तथापि एतदन्तःसंविज्ञानात्मकं ज्ञत्वकर्तृत्वरूपमात्मतत्त्वाख्यमविनश्वरं तन्मुक्तौ संस्कारात् हेतोः प्रतिपक्षः स्यात् नश्वरं भवेत् संसारभाविन्या अपि संविदोऽस्याः क्रियायाश्चाभावात् । एतदुक्तं भवति—यत्तत्संसारावस्थायां तस्यात्मीयं ज्ञत्वकर्तृत्वमभूत् तन्मुक्त्यवस्थायामपि यद्यस्ति अमुक्त एव तदा, इति किमीश्वरगुणसंक्रान्त्यादिना कल्पितेन, अथ विनष्टमित्युच्यते न तर्हि नित्यः पुरुषो ज्ञत्वकर्तृत्वयोर्विनाशात् तद्व्यतिरेकेणान्यस्य पुंसोऽसंवेदनाच्चेति स्वागमविरोधः ॥ ६३ ॥

सर्वागमविरोधश्चात्रेत्याह

महाज्ञानेषु सर्वेषु
नित्यात्मा भाषिता चितिः ।
सर्वागमविरोधित्वा-
त्तदस्थैर्यं न युक्तिमत् ॥ ६४ ॥

'नहि द्रष्टुर्दृष्टेर्मन्तुर्वा मतेः परिलोपो विद्यते'[1] इ-

१ बृहदारण्यक० ४ । ३ ।

त्यागमनिरस्तोऽयं पक्षः । यदुक्तं

'एकस्य प्रतिभातस्तु कृतकान्न विशिष्यते ।

इति ॥ ६४ ॥

युष्मदागमसिद्धोऽयमर्थो भविष्यतीत्याह

सर्वज्ञानक्रियाव्यक्ति-
मुक्तिः शैवेऽपि भाषिता ।
साप्येवं युज्यते पुंसां
नित्ये ज्ञानक्रिये यदि ॥ ६५ ॥

यदुक्तं श्रीमद्रौरवे

'सर्वज्ञः सर्वकर्ता च शिवशक्तिसमन्वितः ।'

इत्यादि । विस्तरेण च संक्रान्तिपक्षनिरासः परमोक्षनिरासकारिकासु आचार्येण दर्शित इति तत एवावधार्यः ॥

योऽपि बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्काराणां नवानामात्मगुणानामत्यन्ताभावो मोक्ष इति नैयायिकवैशेषिकैरुच्यते, यश्च प्रकृतिवियोगो मोक्ष इति सांख्यैरुक्तः, सोऽप्ययुक्त इत्याह

न ज्ञानरहिते मोक्षे
तदुपाये प्रवर्तनम् ।

नहि कश्चित्पदार्थज्ञो
मोहसिद्ध्यै प्रवर्तते ॥ ६६ ॥

सर्वो हि प्रेक्षापूर्वकारी हिताहितयोः स्वरूपं निरूप्य तत्प्राप्तित्यागाय साधनविशेषे प्रवर्तते, न व्यसनितया। न च स्वात्मनो ज्ञाननाशो मूर्छाद्यवस्थापाषाणादितुल्यत्वं कस्यचिदनुन्मत्तस्य हि तत्त्वेनावभासत इति न कस्यचिदपि तदुपायभूते शास्त्रादौ प्रवृत्तिरुपपद्यते इति अनर्थकमेव तत्। ननु निद्रायां प्रवृत्तिर्दृश्यत एव। सत्यम्, स्वप्नप्रत्ययरूपत्वात्तस्या न दोषः। यदाहुः

"वृत्तयः पञ्चतय्यः क्लिष्टाक्लिष्टाः" [योगसू० १।५]

"प्रमाणविपर्ययविकल्पनिद्रास्मृतयः" [योगसू० १।६]

इति। सुषुप्तात्मकत्वेऽपि धातुसाम्यादिजनितशरीरपुष्ट्यात्मकान्तरस्पर्शहेतुकसुखदुःखाद्युपलम्भात् 'सुखमहमस्वाप्सम्' इत्यादि परतः परामर्शात् प्राणप्रेरणादिप्रयत्नविशेषयोगाच्चास्याः प्रत्ययरूपतैव। यदाहुः

'प्रेरणाकर्षणे वायोः प्रयत्नेन विना कुतः॥'

इति ॥ ६६ ॥

ननु अत्यन्तदुःखाभितप्तानां भृग्वग्न्यनशनाम्बुभिर्मरणं दृश्यत इत्याह

दुःखनाशाय नो युक्तं
सुखं दुःखान्वितं वरम् ।

तेषामपि न दुःखनाशायैव तपसि तस्मिन् प्रवर्तनम्, अपितु तस्मात् तपसो विशिष्टमामुत्रिकं सुखात्मकमपि फलमनुभवितुमागमतस्तथाप्रतीतेरिति वरं संसारोऽस्मान्मोक्षात् नतु अज्ञत्वमपुरुषार्थत्वात् अप्रवृत्त्यङ्गं मोक्ष इत्यभ्युपगम्य चैतदुक्तम् नतु आत्मस्वभावत्वात् नित्यत्वव्यापकत्वयोरिव ज्ञानस्याभावो ब्रह्मणापि शक्यः कर्तुमित्युक्तं प्राक् ॥

प्रदीपनिर्वाणवादिनस्तु शाक्याः 'सर्वैव विज्ञानवासना साक्षात् पारम्पर्येण चाविद्यातृष्णानुबन्धित्वात् दुःखात्मिकैव, नतु कदाचिदपि सुखरूपेति सर्वदुःखवासनाविच्छेदायैव प्रवर्तमानाः कारणनिवृत्तिद्वारेणार्थात् कार्यात्मनः स्वज्ञानसन्तानस्य परनिर्वाणाय मुमुक्षवः पर्यवस्यन्ति अतः शून्य एव मोक्षः, इत्याहुः । तान् प्रत्याह

वासना सर्वदुःखा स्या-
न्न भवद्दर्शनं विना ॥ ६७ ॥

युष्मद्दर्शनव्यतिरेकेण कस्यान्यस्यैतत् सौभाग्यम् यत् भवकाले सर्वं दुःखं, शून्यस्तु अत्यन्ताभावो मोक्ष इति । प्रत्यक्षानुमानबाधितोऽयं पक्षः प्राक्प्रतिपादि-

त इति उपहासोऽनेकजन्मदुःखानुभवतत्परित्यागक्लेशैरपि लोकायतफलस्यैव भवतां प्राप्यत्वात् । तदुक्तमाचार्येण परमोक्षनिरासकारिकासु

'मूढानां ज्येष्ठमल्लास्ते येषां स्वात्मा विनश्यति ।'

इति । एष च प्रसङ्गो वेदान्तविदां पाञ्चरात्राणां च समानः । तैरपि ब्रह्मणि नारायणाख्यायां च परस्यां प्रकृतौ जीवात्मनां लयो मुक्तिरभ्युपगता यतः । तस्मात् प्रोक्तनयेन सर्वज्ञत्वमनु कर्तृत्वाभिव्यक्तिरेव परपुरुषार्थभूतो मोक्षोऽभ्युपगन्तव्यः नान्योऽसम्भवादिति ॥६७॥

यदि मुक्तेः प्रागप्यस्ति पुंसः सर्वज्ञत्वादि ततः कथं कार्यं न करोतीत्याह

सर्वदा सर्वभावेषु
पुंशक्त्योरप्रवृत्तितः ।
सिद्धमावरणं चान्यत्
कर्माख्याद्भवबन्धनात् ॥ ६८ ॥

प्रमाणान्तरेण सिद्धसत्ताकस्य सूर्यमणीन्द्रियादेरर्थस्यावरणकृतः कार्यानुपयोगः सिद्ध इति प्रागपि सिद्धसत्ताकस्य सर्वज्ञत्वादेरावृततां कार्यानुपयोगोऽनुमापयतीत्यावरणसिद्धिः । तच्च न कर्म अपितु कर्माख्याद्बन्धनादन्यदित्युक्तं स्वायम्भुववृत्तावाचार्येण

'यद्यशुद्धिर्न पुंसोऽस्ति सक्तिर्भोगेषु किंकृता ।'

इति । अत्रान्तरं तत एवावधार्यम् । भवबन्धनादपि अन्यदविद्यात्मकं मलाभिधानमित्यप्युक्तं तत्रैव

'कर्मतश्च शरीराणि'

इत्यादिना ॥ ६८ ॥

किं तद्भवबन्धनमित्याह

बन्धनानि गुणान्तानि
सांख्याद्यैर्भाषितान्यथ ।
प्रधानादीनि चान्यानि
शैवैरेवोदितानि तु ॥ ६९ ॥

भूततन्मात्रेन्द्रियाहङ्कारबुद्धिगुणपर्यन्तानि तावत् सांख्यादिदर्शनान्तरप्रसिद्धान्येवास्माभिरपि उच्यन्ते । अथानन्तरं गुणकारणं प्रधानं तदादीनि रागविद्याकलान्तानि दर्शनान्तराप्रसिद्धानि शैवैरेवोच्यन्ते। यदुक्तं सृष्टिक्रमेण

'ततोऽधिष्ठाय विद्येशो मायां स परमेश्वरः ।
क्षोभयित्वा स्वकिरणैरसृजत्तैजसीं कलाम् ॥
कलातत्त्वाद्रागविद्ये द्वे तत्त्वे संबभूवतुः ।
अव्यक्तं च ततस्तस्माद्गुणांश्चाप्यसृजत्प्रभुः ॥'

इति । एतानि तु तत्त्वभूतभुवनात्मकानि भवे बन्धना-

नि, नतु अभवेऽतिभवे वेत्यर्थः ॥ ६९ ॥

अथ किमागमेनैवैतानि दर्शनान्तराप्रसिद्धानि भवतां सिद्धानि । न, अनुमानेनापि इत्याह

यः प्रोक्तः कापिलैर्न्यायो
जगद्गौणत्वसिद्धये ।
आगमानुगृहीतत्वा-
न्न्यायः साधुः स एव हि ॥ ७० ॥

येनैव सांख्यैराचैतन्ये सति अनेकत्वात् बुध्यादीनां घटादीनामिव कारणपूर्वकत्वानुमानेन गुणाः कारणमवस्थापिताः, तेनैव गुणानामपि आचैतन्ये सति अनेकत्वात् अव्यक्ताख्यं कारणम्, अव्यक्तरागविद्यानां कालकलानामपि प्रतिपुरुषं भिन्नानां माया अस्माभिः साध्यते इत्युक्तं भोगमोक्षे

'गुणानां कार्यतासिद्धौ यो हेतुरभिधास्यते ।
स क्षित्यादिकलान्तानां योज्यः कारणसिद्धये ॥'

इति अभिधाय,

'आचैतन्ये त्वनेकत्वसंख्यासम्बन्धहेतुतः ।
तेषां कारणपूर्वत्वं सिद्धं बुद्धिघटादिवत् ॥'

इति । यथा चायं न्यायो न सांख्योपज्ञ एवापितु अस्मदागमपरिदृष्टोऽपि तथादर्शितमाचार्येण रौरववृत्तौ

'रागविद्याकलाव्यक्तगुणबुद्धिसमुद्भवम् ।'

इत्येतत्सूत्रव्याख्यायां तत एवावधार्यम् ॥ ७० ॥

ननु च परैः पुरुषाविद्यापरमाण्वाद्यन्यकारणजन्यत्वेऽस्य जगतो न्यायोऽन्यः प्रोक्त इति विरुद्धव्यभिचारीव सप्रतिपक्षत्वादयं न्यायाभास इत्याह

अन्यकारणजन्यत्वे
न्यायो य उदितः परैः ।
सर्वागमाविरुद्धत्वा-
न्न्यायाभासः स उच्यते ॥ ७१ ॥

यथा पुरुषादीनां चेतनत्वेन परिणामासंभवात् अविद्यायाश्चावस्तुत्वात् परमाणूनां चाचैतन्ये सति अनेकत्वतः कारणान्तरपूर्वकत्वेन नित्यत्वासंभवान्न जगत्कारणत्वमिति अनेनानुमानेन

'अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः ।
अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः ॥'
( श्वेता० ४ । ५ )

इत्यादिवेदेतिहासपुराणादिभिश्चागमैर्बाधितत्वात् अयमेवान्यकारणजन्यत्वन्यायो न्यायाभासो न पूर्वप्रदर्शितः तथोक्तं भोगमोक्षे तत एवावधार्यम् । ततश्चाप्रतिपक्षत्वात् अस्य सांख्यन्यायस्य न विरुद्धव्यभिचारिण इव न्याया-

भासता अपितु सम्यग्हेतुतैवेति ॥ ७१ ॥

ननु सुखादीनामात्मगुणत्वेन प्रकृतिधर्मत्वासंभवात् यथा गुणकारणतासिद्धौ जगतोऽस्य 'सुखाद्यन्वयात्' इति सांख्योक्तो हेतुरसिद्धत्वात् न्यायाभासस्तथायमपि भविष्यतीत्याह

सुखाद्यन्वयभावो हि
नासिद्धः कापिलोदितः ।
भोग्यत्वाद्रूपवद्यस्मा-
त्पुंगुणा न सुखादयः ॥ ७२ ॥

यः कदाचित् प्रकाशते नासौ पुरुषगुणो यथा रूपादिः; यश्च पुरुषगुणो नासौ कदाचित् प्रकाशते यथा ज्ञत्वादिः। कदाचिच्च सुखं कदाचिच्च दुःखं रागादयश्च कदाचित् प्रकाशन्त इति न तेऽपि आत्मगुणाः, किन्तु प्रकृतिस्वभावा एव इति नासिद्धत्वात् अस्यापि हेतोर्न्यायाभासत्वमिति कुतोऽन्यस्यापि अस्य भवेत् ॥ ७२ ॥

अथ सांख्यप्रद्वेषात् कारणान्तरकल्पनया विना दुःखमास्यते भवद्भिस्तदास्त्येव तदित्याह

कारणान्तरक्लृप्तौ वा
यावदुक्तैवे[1] प्रभाषितम् ।
कलादिकार्यजातं तु
संस्थाप्यं तावदेव हि ॥ ७३ ॥

१ यैवमभाषितम् इति समस्तः पाठः ।

तदपि सांख्याभ्युपगमेनास्माभिरधिकं मायाख्यं कारणं कलादिगुणान्तस्य कार्यजातस्योक्तमिति नान्यत् व्यवस्थाप्यं प्रमाणाभावादिति ॥ ७३ ॥

अतश्चेदमर्थसिद्धमित्याह

एवं कृते कृतं विद्धि
सर्वागमसमर्थनम् ।
अन्यथा क्रियमाणे तु
शुष्कतार्किकता भवेत् ॥ ७४ ॥

आत्मनि हि व्यवस्थापिते सर्व एव वेदादिरपि आगमः समर्थितो भवति तस्य हि 'आत्मा ज्ञातव्यः' इत्यादेरध्यात्मरूपस्य 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यादेश्च कर्मकाण्डात्मनः सर्वस्यात्मार्थत्वात् । तदसमर्थने तु नास्तिकपक्षाश्रयतः सर्वस्यागमार्थस्योपेक्षितत्वात् बौद्धलोकायतादेरिव शुष्कतार्किकतैव प्रमाणबाधिताभ्युपगता भवेदिति ॥ ७४ ॥

नरपरीक्षोपसंहाराय ईश्वरपरीक्षोपक्रमाय च श्लोकः

पुमानित्थं समाख्यातः
शङ्करं वच्मि सांप्रतम् ।
यतः स भगवान्पुंसां
विधाता भोगमोक्षयोः ॥ ७५ ॥

पुरुषसिद्धिपूर्विका हि ईश्वरसिद्धिरित्युक्तमत्र हेत्वन्तरम्—यतः स एव पुंसां भोगमोक्षयोः कर्ता ततः पुरुषपरीक्षापूर्वं तस्य परीक्षेति । अत एव भोगमोक्षेऽपि ईश्वरपरीक्षा संक्षेपतो विहिता, अत्र तु विस्तरेणेत्यपौनरुक्त्यम् ॥ ७५ ॥

इति श्रीनारायणकण्ठसूनोर्भट्टरामकण्ठस्य कृतौ
नरेश्वरपरीक्षाप्रकाशे नरपरीक्षा
प्रथमं काण्डम् ॥ १ ॥

—=०:*:०=—

अथ

# द्वितीयं काण्डम्

अथ पुरुषपरीक्षानन्तरमीश्वरपरीक्षा । ननु युक्तमेतत्त-न्त्रान्तरीयाणां वक्तुम्, इह तु ज्ञत्वकर्तृत्वस्वभावे पुंसि आवरणभावाभावाभ्यां सवितरीवाल्पमहाविषयत्वे स्वसंवेदनयोग्यतानुमानाभ्यां पूर्वोक्तरीत्या प्रतिपादिते स्वल्पमहतोरीश्वरयोः सिद्धिः स्थितैव ज्ञत्वकर्तृत्वरूपत्वादीश्वरस्येति किमन्यया तत्परीक्षया । सत्यमेतत्, जगद्धेतुभूतानादीश्वरपरीक्षा तु इयमन्यैवेत्यविरोधः । तथाहि न तावदसावस्मदादीनामात्मवत् स्वसंवेदनप्रत्यक्षसिद्धो भिन्नात्मरूपत्वेन तस्य ततोऽन्यत्वात्, नहि आत्मनां स्वसंवेदनमात्राः संकीर्यन्त इत्युक्तम् । नापि इन्द्रियप्रत्यक्षेण परस्परं स्वभावादेवेन्द्रियातीतत्वेन तेषां सिद्धेः, तच्छरीराणामिन्द्रियानतीतत्वसिद्धावपि विशिष्टज्ञानक्रियात्मनोरीश्वरेतरयोरसिद्धेः । यदाहुर्जैमिनीयाः

'न च कैश्चिदसौ ज्ञातुं कदाचिदपि शक्यते ।
स्वरूपेणोपलब्धेऽपि स्रष्टृत्वं नावगम्यते ॥'
(श्लो० व० सम्बन्धाक्षेपपरि० ४८)

'न च तद्वचनेनैषां प्रतिपत्तिः सुनिश्चिता ।
असृष्ट्वापि[1] ह्यसौ ब्रूयादात्मैश्वर्यप्रकाशनात् ॥'
[श्लो० वा० संब० ६०]

---

1 अदृष्ट्वापि इति पाठः ।

इति । किन्तु कार्यव्यवहारादेः कुम्भकारादिरिव सोऽपि स्वकार्याज्जगल्लक्षणात् हेतोरनुमेय इति दर्शयितुं, यैः

'न कदाचिदनीदृशं जगत् ।'

इति वदद्भिर्जैमिनीयलोकायतैर्जगन्नित्यत्वाभ्युपगमेनास्य हेतोरसिद्धत्वमुद्भाव्यते, तांस्तावत् प्रतिक्षेप्तुमाह

**क्ष्मादेः सावयवत्वेन**
**कुम्भवत्कार्यता मता ।**

यत्र यत्र सावयवत्वं तत्र तत्र कार्यता यथा घटादौ; यत्र तु कार्यत्वं नास्ति तत्र सावयवत्वं नास्ति यथा आत्मादौ । सावयवत्वं च सर्वस्यैव पृथिवीपर्वतादेः सनभश्चक्रस्य दृष्टजन्मनो जगतोऽतः कार्यत्वमेव न नित्यत्वमिति वक्ष्यमाणस्यास्य हेतोर्नासिद्धता । अत्र चोपादानकारणवत्त्वैव तावज्जगतः साध्येति दर्शयति ॥

यद्येवमिन्द्रियपरमाण्वादेर्जगद्भागस्य सावयवत्वासिद्धेर्भागासिद्धोऽयं हेतुरित्याह

**आचैतन्ये त्वनेकत्वा-**
**दज्ञातप्रोक्तधर्मणः ॥ १ ॥**

प्रोक्तः सावयवत्वाख्यो धर्मो यस्यासौ प्रोक्तधर्मा अज्ञातश्चासौ प्रोक्तधर्मा चेति । अत्र च 'रक्तः पटो न भवति' इति न्यायेन विशेषणांशसंचारित्वात् निषेधस्य

प्रोक्तधर्मविषयमेवाज्ञानं न धर्मिण्यपि इत्यर्थात् गम्यते तस्य अज्ञातप्रोक्तधर्मणोऽसिद्धपूर्वोक्तसावयवत्वादिधर्मस्येन्द्रियपरमाण्वादेरपि जगद्भागस्याचैतन्ये सति प्रतिपुरुषं भेदेनानेकत्वात् वृक्षघटादेरिव कार्यता मतेति सम्बन्धः। आचैतन्येऽपि सति चित्रपटादेरिव चित्रावयवयुक्तस्य क्ष्मादेर्जगतोऽस्य सौगतैरेकत्वेनाभ्युपगमादस्य हेतोरसिद्धत्वमिति पूर्वो हेतुरुक्तः, ततश्च हेतुद्वयेन सावयवानिरवयवात्मकं सर्वमेव जगदुपादानयुक्तं सिद्धमतो न भागासिद्धतेति

'न कदाचिदनीदृशं जगत्'

इति पक्षोऽनुमानानिराकृत इत्यर्थः। न च सामान्यादिभिर्व्यभिचारस्तेषामपि पक्षीकृतत्वात्। नाप्यस्य

'न कदाचिदनीदृशं जगत्'

इत्यभ्युपगमस्य प्रयोजनमस्ति एवमपि भगवतो भूतेश्वरस्य हेत्वन्तरेण अधिष्ठातृतयाऽसिद्धेः। यदुक्तम्

'इदं भूतमयं विश्वमुभ्रश्यदुचितस्थिति।
स्थितेर्व्यनक्ति चिद्रूपं हेतुं जीवच्छरीरवत्'॥

इति। किंच 'न प्रतिज्ञामात्रात् अर्थसिद्धिः' इत्यत्र हेतुर्वक्तव्यः। ननु पृथिवीपर्वतादि जगन्न कदाचिदनीदृशमुत्पत्त्यभावयोरदर्शनात्, तथात्वे वा प्रमाणाभावात् आत्मवदित्यत्र हेतुरस्त्येव। न, असिद्धत्वात्, नहि कल्पाद्यन्तभाव्युत्प-

त्तिविनाशादर्शनमधुना सिद्धमस्मदादेः, प्रतिज्ञार्थैकदेशश्च तथाभूतैर्वृत्तादिभिरनैकान्तिकश्चेति । एतेन स्थित्येकस्वभावत्वादद्यवत् इत्येवमादयोऽपि हेतवः प्रत्युक्ताः । योऽपि कर्तुरस्मरणाद्वेदवत् इति हेतुरुच्यते सोऽप्यस्माकमसिद्धः,

"द्यावापृथिवी जनयन्देव एकः" ( अ० वे० १३ । २ । २६ )

इत्यागमविरुद्धश्च । दृष्टान्तश्चायं साधनधर्मासिद्धो वेदस्य रचनापूर्वकत्वेनाभिनवकविविरचितवाक्यवत् अकर्तृकत्वासिद्धेरित्यलमसिद्धेतूपन्यासनिरासैरिति । ननु सन्निवेशवशतः कस्यचिन्नित्यत्वाशङ्का केन वार्यते धूमादेर्वह्न्यादिभ्योऽन्यतो भावाशङ्केव । सम्बन्धग्राहकत्वात् प्रमाणादेवेति वक्ष्यामः । प्रोक्तं च भवद्भिरपि

'उत्प्रेक्ष्यते हि यो मोहादजातमपि बाधकम् ।
स सर्वव्यवहारेषु संशयात्मा क्षयं व्रजेत्' ॥

इति ॥ १ ॥

ननु वाद्यसिद्धोऽयं हेतुर्यतो मूलपृथक्त्ववादिभिः सांख्यभेदैः पृथिव्यादीनि तत्त्वानि नित्यानीष्यन्ते । तदन्तर्गताश्च भवन्त इत्याह

तत्त्वादिभुवनान्तं तु
कलादिक्ष्मान्तमीरितम् ।

शैवैः कार्यं हि तज्जातं
कुम्भवन्न स्वभावतः ॥ २ ॥

उपादानादि तस्येष्टं
विमतिः कर्तृकारके ।
अतः स साध्यतेऽस्माभि-
स्तत्कर्ता शङ्करः स्फुटम् ॥ ३ ॥

न केवलं परप्रसिद्धं पृथिव्याद्येव यावत्सर्वमेव तत्त्वभावभुवनात्मकं पृथिव्यादिकलाप्रान्तं जगदस्माभिर्वृत्तघटादिवदेव कार्यमिष्यते, हीति यस्मात् तस्योपादानकारणं माया, आदिग्रहणात्सहकारिकारणं कर्म प्रोक्तम् । अतो न मूलपृथक्त्ववादिभिरिव तत् स्वभावतो नित्यत्वेनास्माभिरिष्यते, अपितु मूलैकत्ववादितया घटादिवत्कार्यमेवेति न बाह्यासिद्धता । ततश्च उभयवादिसिद्धादस्माद्धेतोर्वक्ष्यमाणनयेनेश्वर एव साध्यः ॥ ३ ॥

कथमित्याह

अदृष्टकर्तृ कायादि
कार्यं प्रज्ञावता कृतम् ।
कुम्भवत्

यद्यत्कार्यं तत्तत् विशिष्टज्ञानक्रियायुक्तकर्तृपूर्वं दृष्टं य-

था घटादि, कार्यं च तनुकरणभुवनाद्यदृष्टकर्तृकं सर्वमेव जगत् प्रतिपादितम्, तस्मादपि विशिष्टज्ञानक्रियात्मककर्तृपूर्वकं सिद्धमिति यस्तस्य कर्ता स परमेश्वरः सिद्धः। अत्राहुः कार्यत्वस्य कर्तृपूर्वकत्वरूपत्वात् प्रतिज्ञार्थैकदेशोऽयं हेतुरिति । तदयुक्तम् । सांख्यसौगतैः कार्यत्वाभ्युपगमेऽपि जगतः कर्तृपूर्वकत्वानिष्ठैरत एव उपादानकारणवत्त्वैवात्र कार्यता विवक्षितेति दर्शितम् । नाप्यनन्वयः दृष्टकर्तृकेषु कार्येष्वन्वयसिद्धेः । अदृष्टकर्तृकमेवात्र पक्षीकृतम् । यस्त्वाह—किमनेन अनुमितानुमानेन, सावयवत्वादित्ययमेव हेतुः कर्तृपूर्वकत्वसिद्धौ कस्मात् नोपादीयते इति, सत्यम् उपादीयेत यदि तावन्मात्रस्यैव जगतस्तत्साधयितुमभिप्रेतं स्यात् निरवयवस्याप्यभिप्रेतमिति नैवमुपात्तम्

नचात्र गृहान्तःप्रविष्टसूर्यरश्मिषु उपलभ्यमानैस्त्रसरेण्वादिभिरनैकान्तिको हेतुरदृष्टकर्तृपदेन धर्मिणो विशेषितत्वादित्याह

**नाविपक्षत्वा-**
**दनेकान्तस्त्रसादिभिः ॥ ४ ॥**

विपक्षे हि हेतुर्वर्तमानोऽनैकान्तिकः प्रमेयत्वादिः । न चात्र त्रसादयः आदिग्रहणात् सिकतोपलादयो विपक्षास्तेषामपि अदृष्टकर्तृपदेन पक्षीकृतत्वात् अपितु

आत्माद्य एव । सन्दिग्धो हि धर्मः साध्यो न सिद्धो बाधितो वा । यदुक्तं भवद्भिरपि

[1]सन्दिग्धहेतुवचनाद्[2]व्याप्तो हेतुरनाश्रयः ।

इति । अदृष्टकर्तृकेषु च सर्वेष्वेव कार्येषु कर्तृपूर्वकत्वं तत्साधकबाधकप्रमाणाभावात् सन्दिग्धं परस्येति हेत्वभिधानविषयत्वात् त्रसादिष्वपि वास्तवपक्षत्वयोगात् साध्यमेवेति ते विपक्षीकृता न तु व्यभि[3]चारिभयेनेति । न च पक्ष एव व्यभिचारविषयः धूमादग्न्यनुमानादावपि तथाप्राप्तेः सर्वानुमानाभावप्रसङ्गः । निश्चितसाध्याभावश्च वास्तवो विपक्षः । न च त्रसादिषु केनचिदपि प्रमाणेनाकर्तृपूर्वकत्वं निश्चितमिति कुतो विपक्षता कर्तुरदर्शनमात्रस्योत्सन्नमठकूपादिभिर्व्यभिचारात् । कूपादाविव त्रसादिषु न कदाचिदस्माभिः कर्ता दृष्ट इति चेत्, अत एवास्मदाद्यगोचरोऽसावावेशादौ पिशाचादिवत् तत्र संभाव्यमानः प्रमाणेन विना नास्तीति शक्यते निश्चेतुमिति सन्दिग्ध एव । ततस्त्रसादिषु विपक्षता क्षपयितुं न शक्या । तर्हि तृणलतादीनां दृश्यमानेभ्य एव पृथिव्यादिभ्यो हेतुभ्यो जन्मदृष्टेरदृष्टकर्त्रन्तरकल्पनेऽनवस्थाप्रसङ्गादत्र विपक्षत्वमिति तैरनेकान्तः । यदाहुः

---

१ ग० पु० सन्दिग्धे हेतु इति पाठः ।

२ ग० पु० व्यस्तो हेतुरिति पाठः ।

३ ग० पु० व्यभिचारभयेनेति पाठः ।

'येषु सत्सु भवत्येव यत्तेभ्योऽन्यस्य कल्पने ।
तद्धेतुत्वेन सर्वत्र हेतूनामनवस्थितिः ॥'
'शाखापधादिसंबन्धाचैत्रस्य[1] प्रणारोहणे ।
[2]असंबद्धस्य किं स्थाणोः कारणत्वं नु कल्प्यते ॥'

इति । कथं तर्हि तेऽपि कदाचिन्न भवन्ति । सहकारिणो वर्षातपादेरभावात् । तस्यापि कथमभावः । ननु अदृष्टवशात् तर्हि तृणादीनां दृष्टेष्वेव कारणेषु सत्सु भावो न सिद्ध इति अदृष्टस्यापि अप्रतिक्षेपान्न विपक्षता । ननु अदृष्टं कर्मैवास्माभिरिष्यते इति चेत् न विशेषे[3] प्रमाणाभावात् अदृष्टस्य पिशाचादेः कर्तुरभ्युपगमात् हेतुकर्तुश्च क्वचित् देवतात्मनः । यदुक्तम्

'येऽपि मन्त्रविदः[4] केचिन्मन्त्रान्कांश्चन कुर्वते ।
प्रभुप्रभावस्तेषां स तदुक्तन्यायसिद्धितः ॥'

इति । तस्यात्रापि संभवान्नैव पिशाचादिरस्तीति जैमिनीयाः । यदाहुः

'प्रमाणपञ्चकं यत्र वस्तुरूपे न विद्यते ।
वस्तुसत्तावबोधार्थं तत्राभावप्रमाणता ॥' (श्लो० वा० अभा० प० १)

---

१ ग० पु० संबन्धाश्चैत्रस्य इति पाठः ।

२ ग० पु० असंबुद्धस्येति पाठः ।

३ ग० पु० विशेषप्रमाणाभावादिति समस्तः पाठः ।

४ ख० ग० पु० तन्त्रविद इति पाठः ।

इति । तदयुक्तं प्रमाणानिवृत्तावपि अत एव भावसिद्धेर्भूनिहितद्रव्यवत् । न चात्रापि प्रमाणं नास्त्येव पुरुषमात्रासंभविनोऽतीन्द्रियार्थस्याविसंवादिनस्तदानीं तत्र ज्ञानस्य सिद्धेः । तदपि कर्मवशात् तदानीं पुंस आविर्भवतीति चेत् युक्तम्, यदि तस्य तदाविर्भूतं भवेत् स त्वपस्मृतेस्तदानीं मूढवेदन एव सिद्धः । नहि इदं मम ज्ञानमिदं नेत्यत्र स्वानुभवव्यतिरेकेणान्यत् प्रमाणमस्ति, नापि गच्छतस्तृणादिज्ञानस्येव तस्य भवतोऽपि अनुपलक्षणं युक्तं निश्चयात्मकत्वात् । यदाहुः

'न च निश्चयविज्ञानं स्वात्मनैव न विद्यते ॥'

इति । ततः पुरुषवेदनानुप्रवेशात् देवदत्तादिज्ञानवत् ततोऽत्यन्तभिन्नं तत् संविन्मोहकर्तुस्तदानीं कस्यचित् सातिशयस्य पिशाचादेस्तत् ज्ञानमिति कार्यतोऽभ्युपगन्तव्यम् । न कर्मणां जडत्वादिति न पिशाचादेरस्मदाद्यगोचरस्यापि तत्र कर्तुरभावः । ननु तथापि कर्मणस्तत्र हेतुत्वमस्त्येव । किमतः कर्तुरदृष्टस्यापि संभवात् तृणादावदृष्टकर्तृपूर्वकत्वसंशय इति न विपक्षता, अपितु प्रोक्तनयेन वास्तवं पक्षत्वमेवेति । न च कर्मणोऽपि कृष्यादेरिव चेतनानाधिष्ठितस्य कार्यजनकत्वमिति वक्ष्यामः । तत्तृणादीनां दृष्टहेतुत्वेऽपि परैरदृष्टकार्यत्वेनोपगमात् प्रत्युतात्र सपक्षत्वमिति मत्वा त्रसादिभिरेव विपक्षत्वाशङ्क्यानैकान्तिकत्वं परिहृतमाचार्येण नतु तैरपीति ॥ ४ ॥

नन्वासिद्ध एवायं हेतुरिति पराभिप्रायमाह

धीमत्कृतं तु यत्कार्यं
दृष्टं तस्यैव दर्शनात्।
धीमतोऽनुमितिर्युक्ता
देहादेर्न विपर्ययात्॥ ५॥

यदेव हि यस्य कार्यत्वेन सिद्धं तदेव तस्यानुमापकं न कार्यमात्रं धूमादीवाग्न्यादेः, न शकटादि विशिष्टमेव घटपटप्रासादनगरादि कार्यं कर्तृजन्यं सिद्धमिति तत एव विशिष्टज्ञानात्मकर्त्रनुमानं युक्तं, नतु कार्यशब्दवाच्यत्वे तद्विजातीयात् तनुभुवनकरणादेः कार्यान्तरात् तत्र 'तत्कार्यत्वात्' इति हेतोरप्यसिद्धेः। यदाहुः सौगताः

'सिद्धं यादृगधिष्ठातृभावाभावानुवृत्तिमत्।
सन्निवेशादि तद्युक्तं तस्माद्यदनुमीयते॥
वस्तुभेदे प्रसिद्धस्य शब्दसाम्यादभेदिनः।
न युक्तानुमितिः पाण्डुद्रव्यादिव हुताशने॥
अन्यथा कुम्भकारेण मृद्विकारस्य कस्यचित्।
घटादेः कारणात्सिद्ध्येद्वल्मीकस्यापि तत्कृतिः॥
जात्यन्तरप्रसिद्धस्य शब्दसामान्यदर्शनात्।
न युक्तं साधनं गोत्वाद्वागादीनां विषाणवत्॥'

इति॥ ५॥

एतत् प्रतिक्षिपति

कार्यत्वादेव कुम्भादे-
देहादिर्न विलक्षणम्।
कार्यं च न क्वचिद्दृष्टं
प्रज्ञावत्कारणं विना ॥ ६ ॥

न तावददृष्टकर्तृकेषु तनुकरणभुवनादिषु कार्यत्वमसिद्धं भवताम्, येन दृष्टकर्तृकेभ्यो विजातीयत्वाभ्युपगमो युक्तः स्यात्, जगतः सर्वस्यानित्यत्वेन समनन्तरप्रत्ययोपादानाभ्युपगमात्। ननु आश्रयाणां भेदात् तदपि भिन्नमेव। न, तेन रूपेण तेषामपि अभिन्नत्वात् शावलेयबाहुलेयादीनामिव गोत्वेन, शब्दघटादीनामिव वा कृतकत्वेन। नहि अन्यथा कृतकत्वेनानित्यत्वं घटादिवत् शब्दादावनेकवृत्त्यादिभिर्वानेकत्वं भूतकण्ठमालागुणवत् सामान्यादौ शक्यमुपपादयितुं भवद्भिः। तेन रूपेण तेषां समानतैव, यदुक्तम्

"साध्यधर्मसामान्येन समानोऽर्थः सपक्षः"

इति, न कार्यत्वेनेति चेत् जितं जिगीषुभिरभिनवैः प्रसिद्धन्यायनिह्नवेन असिद्धताद्यान्ध्यमुत्पादयद्भिः। कथं वा सन्निवेशवतां सर्वेषां प्रमेयत्वसत्त्वकार्यत्वशून्यत्वानात्मत्वादिभिरिव न सन्निवेशवत्त्वेनापि समानता। ननु सन्निवेशो नाम नान्यत् किञ्चित् सन्निविष्टेभ्यः। बालभाषितमेतत्, सतोऽपि किमन्यत्सत्त्वं कार्याद्वा कार्यत्वम्। सत्यम्, भिन्नानामपि तेषामेकविमर्शजनकत्वेन समानते-

ष्यते । यदुक्तम्

‘ एकप्रत्यवमर्शाख्यज्ञानादेकार्थसाधने ।
भेदेऽपि नियताः केचित्स्वभावेनेन्द्रियादिवत् ॥
ज्वरादिशमने काश्चित्सह प्रत्येकमेव वा ।
दृष्टा यथा वौषधयो नानात्वेऽपि न चापराः ॥ ’

इति । तर्हि सन्निवेशवत्त्वेनापि सर्वसन्निवेशवतां समानत्वं प्रतीयमानं तद्वदेव भविष्यतीति केषांचित् जात्यन्तराभिधानमयुक्तमेव । अकर्तृपूर्वत्वसिद्धौ तेषां जात्यन्तरत्वमेकशब्दवाच्यत्वेऽपि स्यात् उपादानकारणभेदसिद्धाविव पाण्डुत्वादेरुपलभ्यमानाकारान्यत्वनिश्चये वा गोशब्दवाच्यानामिव वागादीनां नवानां न तु तत्संशये । सम्बन्धग्रहणकाल एव महानसदृष्टात् धूमात् अतिदूरवर्तित्वेनादृष्टाग्निसम्बन्धस्य धूमान्तरस्यैवाग्न्युपादानतायां सन्देहमात्रादसिद्धेः अदर्शनमात्रस्य च सन्देहफलत्वादित्युक्तम् । तर्हि असिद्धत्वादेव तेषां दृष्टकर्तृभ्यो जात्यन्तरता स्यात् । न, अत एव तस्य साध्यत्वात् धूमादेरिवाग्न्याद्युपादानता, न दूरवर्तिनि पर्वतादौ । साधनस्य हि असिद्धता दूषणं साध्यस्य तु भूषणमेवेत्युक्तम् । अथ व्याप्तिरसिद्धा कार्यमात्रस्य कर्तृमात्रेणेति उच्यते घटादीनां विशिष्टकर्तृत्वेनैव दर्शनात् क्व वा धूममात्रस्य वह्निमात्रेण व्याप्तिः सिद्धा भवताम् । धूमविशेषोऽपि हि कश्चिदेव महानसादावग्निविशेषजन्यः सिद्धः । ननु तार्णपार्णादेर्विशेषव्यभिचारेऽपि ततो धू-

ममात्रस्य दर्शनात् । न, तदापि निर्विशेषस्य सामान्यस्य प्रत्यक्षेणासिद्धेः स एव तदवस्थो दोषः । सत्यम्, अत एवार्थसामर्थ्यादनुमानतो वा सर्वत्राग्निजन्यो धूमो धूमत्वात् महानसदृश्यधूमवत् इत्यप्रतिष्ठितभेदस्याग्निमात्रस्य व्यापकस्यात्र प्रतिष्ठितभेदं धूममात्रं व्याप्यं लिङ्गतया प्रतीयते । यदुक्तम्

'सामान्यविषयं प्रोक्तं लिङ्गं भेदाप्रतिष्ठितेः ।

इति । यद्येवमिहापि घटपटशकटादिकार्येषु कर्तृविशेषस्य कुम्भकारादेर्व्यभिचारात् अप्रतिष्ठितभेदमेव कार्यमात्रं कर्तृमात्रस्य व्याप्यं हेतुत्वेन सिद्धमिति न व्याप्तेरपि असिद्धिः, प्रतिबन्धमूलैव हि व्याप्तिरिति व्याप्तिविदः । सत्यम्, यदि प्रतिबन्धो भवेत्, दृष्टान्ताधीनैव तु अत्र व्याप्तिः, सा च तत्पुत्रादेः श्यामत्वानुमानवत् व्यभिचारिण्येवेति अननुमानम् । इदमपि चिकित्सकोपदेशवत् श्रद्धेयमेव । प्रतिबन्धो हि धूमाग्न्यादेरिवात्रापि प्रत्यक्षसिद्ध एव । धूमाग्न्योर्हि कार्यकारणभावो न दृष्टान्तसिद्धप्रत्यक्षोपलम्भमन्तरेण कृतकत्वानित्यत्वयोर्वा तादात्म्यमनेकवृत्त्यनेकत्वयोर्वा अन्यतोऽवगम्यते । भवद्भिरपि संबन्धसाधकप्रमाणविषयतया च दृष्टान्तः साधनवाक्येषु उपयुज्यते न दृष्टान्तमात्रतयेति, तदभावात् दृष्टान्तमात्रयोगेऽपि 'श्यामस्तत्पुत्रत्वात्' इत्येवमादेरनुमानावस्करस्य व्यभिचारिता तद-

त्रापि उपादानकारणस्येव कर्तुरपि कार्येण सह कार्यकारणभावो दृष्टान्ते प्रत्यक्षोपलम्भप्रमाणसिद्ध इति तद्बलादेव सर्वस्य कार्यस्योपादानेनेव कर्त्रापि व्याप्तिः सिद्धेत्यव्यभिचारः। यद्येवं दृष्टकर्तृकेष्वेव प्रतिबन्धसिद्धेः सा सिद्ध्यति नादृष्टकर्तृकेष्वन्यत्वात्। प्रलापमात्रमेतत्, अन्यत्वमात्रस्य दृष्टकर्तृकेषु दृष्टाग्निसंबन्धेषु च धूमादिषु दर्शनेनानैकान्तिकत्वात्। अथादृष्टकर्तृकतैव दृष्टकर्तृकेभ्योऽन्यत्वमुच्यते तदपि तथाभूतैर्घटादिकैरनैकान्तिकमेव। अथ तत्र घटादिरूपतया अनन्यत्वमिहापि कार्यरूपतयेति न विशेषः। ननु यज्जातीयो यतः सिद्धः तत एव तस्यानुमानं युक्तम्, न विजातीयात् वल्मीकस्तूपादेरिव कुम्भकारस्य। भिन्नजातीयं च दृष्टकर्तृकात् अदृष्टकर्तृकं कार्यमिति न ततः कर्त्रनुमानं युक्तम्। न, तेन रूपेण तेषां भेदासिद्धेरित्युक्तं कृतकत्वेनेव शब्दघटादीनां सत्त्वेनेव वा सर्वपदार्थानाम्। नहि कृतकत्वस्यानेकविजातीयवस्तुभिन्नस्यानेकविजातीयवस्तुभिन्नेनानित्यत्वेन तादात्म्यं, सत्त्वेन वा क्षणिकत्वस्य भवतामुपपद्यते। ननु तेन रूपेण तेषां समानतैव, न विजातियता। ननु विरुद्धमेतत् विजातीयमेव सजातीयमिति न धर्मभेदात् शावलेयबाहुलेयाविव गोत्वे च। तर्हि एतदेव साधु, यस्य यथाभूतेन सह सम्बन्धः सिद्धः, स तथाभूतमेव प्रतिबन्धबलात् गमयति। किमत्र सजातीयत्वासजातीयत्वेनेति। यदुक्तं भवद्भिरपि

'यदीदं स्वयमर्थानां रोचते तत्र के वयम् ।'

इति । अतश्च वल्मीकस्तूपादेः कुम्भकारव्यभिचारेऽपि चेतनायुक्तकर्त्रव्यभिचारोऽस्त्येवेति तत्रापि स एव साध्यः । किंच कात्र जातिरभिप्रेता, यदपेक्षया सजातीयत्वासजातीयत्वव्यवहारः । ननु भवतामिव सदृशतैव । यद्येवं, सत्त्वेनैव सर्वभावानां कार्यत्वेन सर्वकार्याणां सदृशत्वमिति तदेवाविनाभावात् कर्तृसिद्धौ हेतुरुच्यते इति । यज्जातीयो यतः सिद्धः तज्जातीयादेवात्र कर्ता अनुमेय उक्तो न विजातीयाद्वा तच्छब्दमात्रवाच्यादिति वासिद्धता । कथं तर्हि पाण्डुत्वादेरपि नाग्निजन्यता तदभावेऽपि मकोलादिषु तस्य दर्शनात् सत्त्वस्येवाकार्यभूतेष्वात्मादिषु । न चाकर्तृकं किञ्चित् कार्यं सिद्धम्, येन तत्र वर्तमानस्यास्य हेतोर्व्यभिचारः संभाव्येत । पर्वततृणादेरपि अदृष्टकर्तृकत्वेन सिद्धेरुक्तत्वादिति न पाण्डुत्वादेर्वह्निजन्यत्वमिव कार्यस्य कर्तृजन्यत्वमसिद्धमिति ॥ ६ ॥

अथ यथाभूतेनैव यस्य प्रतिबन्धः सिद्धस्तथाभूत एव तस्मादनुमीयते इत्ययमेव ग्रहस्तत्राप्याह

**न च यद्व्यक्तिसंबद्धा**
**व्यक्तियैवेह संमता ।**
**तस्या एवानुमानं स्या-**
**त्पुनस्तदुपलब्धितः ॥ ७ ॥**

यद्येवं, सकलसजातीयविजातीयव्यावृत्तेन स्वलक्षणेनैवाग्न्यादिना महानसादौ धूमादेः स्वलक्षणस्यैव प्रतिबन्धः सिद्धः, तस्य चाननुयायित्वात् न धर्म्यन्तरेऽनुमानं संभवति नापि तत्रैव प्रत्यक्षसिद्धेरनुमानायोगादिति निवृत्ता इदानीमनुमानवार्ता। जितं प्रत्यक्षैकप्रमाणवादिभिर्लौकायतिकैरेव। तस्मात्सर्वेणानुमानवादिना सामान्यविषय एवानुमानं प्रमाणं कार्यमिहेत्यतोऽप्यस्य नासिद्धता ॥ ७ ॥

अन्ये तु शरीरयुक्तकर्तृपूर्वकत्वादिसाधनात् धर्मविशेषविपरीतसाधनोऽयं विरुद्धः शरीरयुक्तकर्तृपूर्वकत्वेनैव घटादौ दृष्टान्तेऽस्य हेतोर्व्याप्तिसिद्धेरित्याहुः।

'यथा सिद्धे च दृष्टान्ते भवेद्धेतोर्विरुद्धता।
अनीश्वरविनाश्यादिकर्तृकत्वं प्रसज्यते ॥ [श्लो० वा० संबन्धाक्षेप प०८०]
शरीरादेर्विना चास्य कथमिच्छापि सर्जने।
शरीराद्यथ तस्य स्यात्तस्योत्पत्तिर्न तत्कृता ॥' [श्लो० वा० सं०क्षे०प०४८]

इति। एतदेव प्रतिक्षिपति

सिषाधयिषता न्यायः
साध्यधर्मविपर्ययम्।
परेषां हि शरीरादे-
र्दृष्टेनैव निवर्त्यते ॥ ८ ॥

साध्यधर्मस्याशरीरकर्तृपूर्वकत्वस्य विपर्ययं कार्यत्वादे-

वासात् हेतोः साधयितुमिच्छतां परेषां तनुकरणादेर्धर्मिणः स विरुद्धसाधनन्यायः प्रत्यक्षेणैव निवार्यते। स्वकार्यकारणस्पन्दादेः कार्यस्य शरीरान्तरं विनैव इच्छायुक्तकर्तृपूर्वकत्वेन आन्तरस्पर्शनेन्द्रियस्वसंवेदनप्रत्यक्षाभ्यां सिद्धेः कार्यत्वं सर्वत्राविनाभावात् तावन्मात्रमेव गमयति, नतु शरीरयुक्तकर्तृपूर्वकत्वमपि व्यभिचारात्। तन्न धर्मविशेषविपरीतसाधनोऽयं हेतुरित्यर्थः। अन्यथा कृतकत्वादयोऽपि शब्दादौ घटादिवत् पृथुबुध्नोदराद्यविनाभावेनानित्यत्वं गमयेयुः। धूमादयश्च पर्वतादावपि महानसादाविवापर्वतवर्तिनं वह्निमिति सर्वस्य धर्मविशेषविपर्ययसाधनात् हेत्वभावप्रसङ्गः। अथ तत्र य एवाव्यभिचारी धर्मः स एव साध्यो नान्यो व्यभिचारादित्युच्यते! तदिहापि समानमित्यविरुद्धता। ननु क्षणिकत्वादर्थानामत्रापि पूर्वदेहक्षणसहकारिणो देहिनो देशान्तरे देहिक्षणोऽन्य एवोत्पद्यते, तन्न कार्यं देहयुक्तकर्तृपूर्वकत्वं व्यभिचरतीति विशेषविरुद्ध एवायमिति कश्चित्। यदाह धर्मकीर्तिरपि

'तस्मात्पृथगशक्तेषु येषु संभाव्यते गुणः।
संहतौ हेतुता तेषां नेश्वरादेरभेदतः॥'

इति। सत्यम्, यदि क्षणिकत्वमस्य स्यात्, तत्तु प्रतिक्षिप्तमात्मसिद्धौ, तत्प्रतिक्षेपमूलत्वात्तस्याः। अपि चाशकुनाभिधानस्वभावस्यैव भवतः सर्वत्र तदभिधानं दौर्भाग्यमेव प्रकाशयति, क्षणिकत्वे क्रियायाः संभवा-

भावेन कर्तृत्वस्याप्यसिद्धेः। कोऽसौ धर्मो यस्य विशेषविपर्ययसाधनता। निराकृते हि क्षणिकत्वे सिद्धेऽभ्युपगते वात्मनि कर्तृत्वे वा ईश्वरपरीक्षाप्रस्तावो युक्तो, नान्यथा। तन्मध्ये तु क्षणिकाश्रयो विकल्पोऽभ्युपगमनिराकृत एव। ननु स्थैर्येऽपि तद्विषयत्वात् स्पन्दक्रियायाः शरीरं तस्यापेक्षणीयमेव। बालप्रलापितमेतत्, घटादिवद्धि कार्यतया तदपेक्षणीयम् नतु शरीरतया। ननु अचलदवस्थं चलदवस्थानिवृत्त्यर्थं तदपेक्षणीयमेव। सत्यम्, घटादिवद्धि कार्यतयेत्युक्तम्। ननु अशरीरस्य ज्ञानक्रिययोरनुपपत्तिः। यदाह कुमारिलः

'अशरीरो ह्यधिष्ठाता नात्मा मुक्तात्मवद्भवेत्।' [श्लो०वा०संब०प०७८]

इति। तदयुक्तं नहि दृष्टेऽनुपपन्नं नाम, दृष्टान्तश्च साध्यधर्मासिद्धो मुक्तात्मनां सर्वज्ञत्वयोगेऽपि ईश्वरसमत्वाभ्युपगमात्। तर्हि विज्ञानकैवल्यादिवद्भविष्यति। न तेषामशरीरत्वं तथात्वहेतुः अपितु मल एवेत्युक्तमन्यत्र।

'यो ज्ञश्चायमदेहत्वादिन्द्रियाद्यप्रसिद्धितः।'

इत्येतदेव शब्दान्तरेणाह। तेनापि मीमांसकोपपत्त्युपजीवित्वप्रसिद्धिः केवलं बौद्धानां प्रकाशिता भवति नाधिकं किञ्चित्। यदाहुः

'पूर्वपक्षेषु तैरुक्ता या जघन्योपपत्तयः।
ताभिर्दुर्लभलब्धाभिर्मत्ता वल्गन्ति भिक्षवः॥'

इति। कथं वा कार्यकरणाद्यभावे जिनस्य सर्वविषयं

ज्ञानमिष्यते भवद्भिः। ननु तस्यापि शरीरमस्त्येव। तत्किं कर्मजमकर्मजं वा, कर्मजशरीरयोगेऽस्मदादीनामिवासर्वज्ञता, अकर्मजं तु शरीरमवह्न्यादिभ्यो धूमादीव नियतकारणजन्यत्वात् न संभवत्येव। ननु करुणया तस्य शरीरं भविष्यति। सत्यम्, यदि तस्यास्तत्र हेतुत्वं प्रत्यक्षतोऽनुमानाद्वा सिद्धं भवेत्। ननु आगमाद्भविष्यति। यदुक्तम्

'तृतीयस्थानसंक्रान्तौ न्याय्यः शास्त्रपरिग्रहः।'

इति। सत्यम्, यदि प्रत्यक्षानुमानविषयस्थानद्वयेऽस्य विशुद्धिः स्यात्, सा तु नास्तीत्युक्तमात्मसिद्धौ। ननु द्वयानुबन्धात्तस्यास्तृष्णादेरिव शरीरहेतुत्वम्। तर्हि अविद्यान्वयात् पुद्गलस्येव कारुणिकस्यापि असर्वज्ञता। ननु निर्माणशक्त्यैव तस्य शरीरमिति बौद्धाः। न तर्हि ईश्वरासिद्धिः। ननु तथापि तस्य शरीरमस्त्येव। यद्यर्थप्रतिपत्त्युपायतया, तर्हि अस्मदादिवत् सोऽपीन्द्रियादिपरतन्त्रबोधत्वादसर्वज्ञ एव, नहीन्द्रियाणां सर्वार्थता संभवति प्रदीपादिवत् परिमितार्थप्रकाशकत्वसिद्धेः। ननु भावनाबलतो विनिवृत्तसमस्तचित्तदोषस्येन्द्रियानपेक्षयैव सर्वार्थदर्शिनोऽपि अधिष्ठानमात्रेण शरीरमुपयुज्यत एव। यद्येवं, कुड्यादेरविशिष्टं तत् न शरीरतामासादयति। यदाहुः

'सांनिध्यमात्रतस्तस्य पुंसश्चिन्तामणेरिव।
निःसरन्ति यथाकामं कुड्यादिभ्योऽपि देशनाः॥'

[श्लो० वा० चो० सू० १ ३८]

इति । शरीरानपेक्षयैव तस्य सर्वविषयं ज्ञानम्, इच्छामात्रेण च निर्माणं कायादौ कर्तृत्वम् अन्यस्यापि च मञ्जुश्रीप्रभृतेः सातिशयस्याभ्युपगतमेव भवद्भिरिति तद्भगवतोऽपि विश्वाधिष्ठानात् विश्वकायत्वसिद्धेः न धर्मविशेषविपरीतसाधनता । नापि कुम्भकारात्मनोऽनीश्वरत्वं ज्ञत्वकर्तृत्वात्मकत्वादीश्वरत्वस्य कुम्भकारादावपि स्वकार्यविषयस्य भावात् । नहि तस्य तत्र ज्ञानाभावे कर्तृत्ववैकल्ये वा कुम्भकर्तृत्वं संभवति अकुम्भकारस्येव, नापि विनाशित्वम् आत्मनः प्राक् नित्यत्वस्य साधितत्वात् तत् न दृष्टान्तेऽपि अनीश्वरविनाश्याद्यपि सिद्धमतो न इत्थमपि विशेषविरुद्धता । एतेन

'इच्छानन्तरवृत्तिस्तु दृष्टान्तेऽपि न विद्यते । [श्लो०वा०संब०प०७९]
अचेतनः कथं भावस्तदिच्छामनुवर्तते ॥' [श्लो०वा०संब० प० ८१]

इत्येतदपि प्रत्युक्तं स्वदेहस्पन्दादौ कुम्भकारादेस्तथैव दृष्टत्वात् । अथ शरीरादन्यो घटादिः न इच्छानन्तरवृत्तिः दृष्ट इत्युच्यते, तदप्ययुक्तमिच्छया विना तस्यापि असिद्धेः । नहि अनिच्छुरन्येच्छुर्वा कुम्भकारो घटं वर्तयन् दृष्टः । ननु इच्छामात्रस्य तत्राहेतुत्वं शरीरादेरपि अपेक्षणात् । किमतः, नहि सहकार्यपेक्षा कारणस्य कार्यं विहन्ति कर्मणो धर्मादेः सुखादाविव शरीराद्यपेक्षेति सैव सर्वत्राव्यभिचारिणीति कार्यादनुमीयते । नच शरीरादन्येषु इच्छया करणमसिद्धमेव । सिद्धमन्त्राणामिच्छयैवाहिविषाभ्यादिषु अन्यथा-

करणादर्शनादिति वक्ष्यत्याचार्यः स्वयमेवोत्तरकाण्डे । प्रोक्तं च सौगतैः

'मन्त्राद्युपप्लुताक्षाणां यथा मृच्छकलादयः ।
अन्यथैवावभासन्ते तद्रूपरहिता अपि ॥'

यद्वा ईश्वरः सशरीर एव स्वनिर्माणकायान्तराधिष्ठानेन पूर्वं स्वशरीरमुपसंहृत्य जगत्कृत्यं संपादयति । अनादिर्हि तस्य परपुरप्रवेशिन इव शरीरप्रबन्ध इत्यपि तत्रैवाचार्यो वक्ष्यति । अतश्च यदुक्तम्

'अनेकान्तश्च हेतुस्ते तच्छरीरादिना भवेत् ।
उत्पत्तिमांश्च तद्देहो देहत्वादस्मदादिवत् ॥' [ श्लो०वा०संब०प० ७७ ]

इत्येतदपि अपहस्तितमेव । तच्छरीरस्य सन्निवेशवत्त्वेऽपि नित्यत्वानभ्युपगमादिति । मायागर्भेश्वराणां च शरीरयोगेऽपि ऐश्वर्यमिष्यत एव । यदुक्तमाचार्येण मोक्षकारिकासु

'कलायोगेऽपि चावश्याः कलानां पशुसङ्घवत् ।
वश्यास्ताः पशुभिः सार्धं तेषां ते तदुपर्यतः ॥'

इत्यविरोधः ॥ ८ ॥

ननु दृष्टान्तोऽत्र साध्यधर्मासिद्धः कार्यस्येश्वरकर्तृत्वेन दृष्टान्ते घटादावसिद्धेः, यदा सिद्धेन विरुद्धं चेत्युक्तं निर्मलत्वसर्वज्ञत्वेच्छामात्रकर्तृत्वाद्यात्मकं हि ऐश्वर्यमनीश्वरकुम्भकारादावदृष्टमेव । यदाह

' कुम्भकाराद्यधिष्ठानं घटादौ यदि चेष्यते ।
नेश्वराधिष्ठितत्वं स्यादस्ति चेत्साध्यहीनता ॥ ' [श्लो०वा०संब०प०७६]

इति । एतदप्ययुक्तमित्याह

मलादिपाशमुक्तत्वं
सर्वज्ञत्वादिधर्मता ।
स्वेच्छानन्तरकारित्वं
कुलाले यन्न दृश्यते ॥ ९ ॥

सर्वमेतन्महेशस्य
सेत्स्यति ह्यर्थशक्तितः ।
नानुमानादितो नातः
साध्यहीनं निदर्शनम् ॥ १० ॥

कुम्भकारादीनामपि स्वकार्ये निर्मलज्ञानता सर्वज्ञत्वं स्वेच्छाकारित्वाद्यपि च ईश्वरत्वं सिद्धमेव अन्यथा घटादिकरणासंभवादित्युक्तम् । अथ यथाभूतं तत् तनुकरणभुवनादिसम्बन्धि साध्यं तथाभूतं न दृष्टान्ते दृष्टमिति उच्यते । वह्न्यादिरपि पर्वतसंबन्धी महानसादावदृष्टत्वात् न धूमादिना साध्य इति सर्वानुमानाभावप्रसङ्गः । ननु धूममात्रं वह्निमात्रे व्याप्तं सिद्धमेव । क्व यथा, न तावत् दृष्टान्ते विशिष्टस्यैव महानसादौ धूमस्य विशिष्टादेवाग्नितो भावदर्शनात् । ननु तदुत्तर-

कालभाविना प्रत्यभिज्ञाप्रत्यक्षेण यद्वारा तद्भाविनः सकृदपि ततो भावादित्यनुमानेन वस्तुशक्तिसामर्थ्येन वा सामान्यविषया व्याप्तिरवतिष्ठत एव । व्यवतिष्ठताम्, पर्वतवर्ती तु वह्निविशेषः कथं साध्यः, नहि अस्मात् व्याप्तिसाधनादनुमानादेरपि तस्य सिद्धिः विशेषे व्याप्त्यभावात् । ननु सामान्याक्षिप्तो विशेष एव अप्रतिष्ठितभेदो व्याप्तिविषय इति चेत् किं पर्वतवर्त्येव, अथ सोऽपि । यदि पर्वतवर्त्येव सिद्धसाधनता व्याप्तिग्रहणकाल एतस्य सिद्धेः, स्वानुभवबाधश्च । अथ सोऽपीत्युच्यते, तर्हि नियमोऽननुमेय एवेति सिद्धसाधनतैव । यदाहुः

'सामान्ये सिद्धसाध्यता'

इति देशान्तरवर्तिनि अग्नौ प्रवृत्तिप्रसङ्गश्चेति । ननु पक्षधर्मताबलान्नियतस्य धूमस्य ग्रहणात् नियतो वह्निः प्रतीयते

'प्रमाणमनुमानं हि त्रिरूपाल्लिङ्गतोऽर्थदृक् ।'

इत्यविरोधः । यदाह धर्मकीर्तिः "सामान्यं च साध्यं न च सिद्धसाध्यता तदयोगव्यवच्छेदस्यासिद्धेः" इति । यद्येवमिहापि अप्रतिष्ठितभेदः कार्यविशेष एव कर्तृविशेषव्याप्तः सिद्ध इति तनुकरणभुवनादेः कर्यात्मनोऽर्थस्य शक्त्या तत्कर्तुरपि विशिष्टस्य स्वकार्यविषयममलत्वसर्वज्ञत्वेच्छामात्रकर्तृत्वाद्यपि ईश्वरत्वं सिद्ध्यतीति न

दृष्टान्तः साध्यविकल इत्यदोषः । तर्हि कुम्भकारादिवत् स्वकार्यादन्यत्र तस्य अज्ञानमनीश्वरता वा स्यात् । कान्यत्र तत्कार्यतनुकरणभुवनादिव्यतिरेकेणान्यस्याभावात् । ननु अन्यत् नास्तीति कुतः । अस्तु, तत्पुरुषार्थसाधनं चेत् तत् कार्यमेव तदसाधने तु तस्मिन् शशविषाणादाविव तस्याज्ञानं भूषणमेव । यदाहुः

'अर्थक्रियासमर्थस्य विचारैः किं तदर्थिनाम् ।
षण्ढस्य रूपवैरूप्ये कामिन्याः किं परीक्षया ॥'

इत्यविरोधः । ननु कुम्भकारादिकार्यमेव तस्य कार्यादन्यत् । सत्यम् , कुम्भकारादिरचनान्यथानुपपत्तेस्तु तत्रास्याज्ञानादि न संभवत्येव । नहि कुम्भकर्तृत्वं कुम्भकारस्याहेतुकमपितु ईश्वरहेतुकमित्युक्तम् । नच कुम्भाज्ञाने तत्कर्तृरचना यतः ॥ १० ॥

ननु यः कर्ता नासावीश्वरः सर्वज्ञो वा यथा कुम्भकारः, कर्ता च तनुकरणादेर्भवद्भिरभ्युपगतोऽतः सोऽपि अनीश्वरोऽसर्वज्ञो वा इत्यादिप्रतिहेतुप्रक्षिप्तोऽयं पक्ष इत्याह

कुलालसमतां पत्युः
परस्य प्रोक्तहेतुतः ।
अनुमित्सोर्विरुद्धो हि
स्वराद्धान्ते न जायते ॥ ११ ॥

यद्येवं यत्र धूमस्तत्रापर्वतसंबन्धी वह्निः यथा महा

नसादौ धूमश्च पर्वते तस्मात् न पर्वतवर्ती तत्र वह्नि-रिति न क्वचित् एवंविधस्य प्रतिप्रयोगावस्करस्य निवृ-त्तिरिति सर्वानुमानाभावो भवतां भवेत् ॥ ११ ॥

अत्र पराभिप्रायः

तवैवायं विरोधश्चेत्

यस्य हि भूयोदर्शनगम्या व्याप्तिः तस्यैवायं विशे-षान्तराश्रयो विरुद्धाव्यभिचारिप्रसङ्गदोषः, नास्माकं प्रतिबन्धनिबन्धनत्वात् तस्याः । सत्त्वधूमादयो हि हे-तवः तादात्म्यतदुत्पत्तिभ्यामनित्याग्निमात्रव्याप्ताः सि-द्धाः न तद्विशेषव्याप्ताः तद्व्यभिचाराद्वस्तुनो रूपान्त-रासंभवाच्चेति कुतस्तेषां विरुद्धाव्यभिचारिसंभवः ॥

आचार्य आह

न मानं साध्विदं यदि ।
अर्थशक्त्या निरुद्धत्वा-
त्साधुत्वं चास्य तत्कुतः ॥ १२ ॥

यदीदमनुमानमपि न साधु न प्रतिबन्धमूलं भवेत् भवेदेवास्यापि प्रतिप्रयोगसंभावना यावता अर्थस्य सा-ध्यस्य कर्तुः शक्तिः कार्यजनकत्वं तया व्याप्तत्वात् अस्यापि कर्तृत्वानुमानस्य साधुत्वं कार्यानुमानरूपता इति तत्प्रतिप्रयोगोद्भावनं कुतः नहि वस्तुबलप्रवृत्तेऽनु-

माने प्रतियोगी संभवति इत्युक्तं यतः ॥ १२ ॥

ननु यथा विशेषाश्रयः प्रतिहेतुर्न संभवति तथा साध्येऽपि विशेषो न स्यात् ततश्च सामान्ये सिद्धसाध्यता दोष एवेत्याह

अर्थप्राप्ता विशेषाश्च
नाग्नेरनुमितस्य हि ।
विनिवारयितुं शक्या
महतोऽपि प्रयत्नतः ॥ १३ ॥

नहि अन्यदेशस्थेन वह्निना तद्देशस्थो धूमो जन्यते इति देशकालाकारनियतधूमग्रहणसामर्थ्यादग्नेस्तद्देशकालाकारयोगव्यवच्छिन्ना विशेषा अनुमीयन्त एव इति न सिद्धसाध्यता दोषः प्रमाणस्यैव विशेषनिष्ठत्वात् नैवं प्रतिहेत्वाश्रितविशेषनिष्ठः प्रमाणव्यापारस्तस्यानियतभेदाश्रयत्वेन सामान्याश्रयत्वादिति तस्य विशेषाश्रयो दोषः कार्यसमा जातिरिति नैयायिकाः । यदाहुः

'साध्येनानुगमाः कार्ये सामान्येनापि साधने ।
संबन्धिभेदाद्दोषोक्तिर्दोषः कार्यसमो मतः ॥ '

इत्यदोषः ॥ १३ ॥

अन्ये तु 'श्रावणः शब्दः' इतिवत् सिद्धसाधनत्वादयुक्तोऽयं पक्ष इत्याहुः, तान् दर्शयति

बीजकर्माणुभिः केचि-
दत्राहुः सिद्धसाध्यताम् ।

जगतः कर्तृपूर्वकत्वं हि भवद्भिः साध्यते, स चोपादानकारणतया बीजशब्दवाच्यः प्रधानाख्यः सिद्ध एव, तत्किं साध्यते इति सांख्याः । एवं कर्मभ्य एव जगत् अतस्तान्येव कर्तृभूतानि सिद्धानीति जैमिनीयाः । यदाहुः

'कस्यचिद्धेतुमात्रत्वं यद्यधिष्ठातृतेष्यते ।
कर्मभिः सर्वजीवानां तत्सिद्धेः सिद्धसाधनम् ॥'
[ श्लो० वा० सं० चे० प० ७५ ]

इति । अणव एव दृष्टफलस्य कर्मणः कर्तारः सिद्धास्तत्किं साध्यते दृष्टफलेभ्योऽन्यस्य कर्मणोऽसंभवादिति लौकायतिकाः । यदाहुः

'चैतन्यविशिष्टः कायः पुरुषः'

इति ।

एतत् क्रमेण प्रतिक्षिपति

न पूर्वाभ्यां विशिष्टत्वा-
द्धिया साध्यस्य सा भवेत् ॥ १४ ॥

न तावत् पूर्वाभ्यां बीजकर्मभ्यां सा सिद्धसाध्यता भवेत्, कुत इत्याह विशिष्टत्वात् धिया साध्यस्येति ।

सिद्धसाधनता हि पक्षदोषः न चास्माभिर्जगतः कर्तृमात्रपूर्वकत्वं साध्यते, अपितु विशेषो बुद्धिमत्कर्तृपूर्वकत्वमित्युक्तम्

'अदृष्टकर्तृ कायादि कार्यं प्रज्ञावता कृतम्।' [२।४।]

इति। नच बीजस्य कर्मणो वा बुद्धिमत्त्वमिति कुतः सिद्धसाध्यता। ननु चेतनान्येव कर्माणीति सौगताः दानादिचेतनाव्यतिरेकेण कर्मान्तरस्यानभ्युपगमात्। अस्तु एवं विशेषोऽर्जने, अनेकभावार्जितानां तु तेषामनेकवासनारूपत्वेनाविज्ञातानामपि सत्त्वाभ्युपगमान्न किञ्चिदेतत् ॥ १४ ॥

लोकायतानामप्याह

**साध्यस्य धर्मिणोपात्तेः**
**कायादेर्न परैरपि।**

न परैरपि अणुभिः सिद्धसाध्यता साध्यधर्मिणः तनुकरणभुवनादेरुपात्तत्वात्, न च भवतां तनुकरणादेरणवः कर्तारः सिद्धा इति कुतः सिद्धसाध्यता। ननु घटादेस्त एव कर्तारः सिद्धाः। सत्यम्, अत एव तेऽत्र दृष्टान्तीकृताः। ननु जलबुद्बुदवत् जीवा विचित्रदेहयुक्ता दृष्टेभ्य एव कारणेभ्यो विचित्रस्वभावेभ्यस्तदन्वयव्यतिरेकानुविधानात् भवन्तीति अनुमिनुमः। न, असिद्धत्वात् कारणस्य हि वेगेतरवातवर्षादेर्भेदे कार्याणां जलबुद्बुदा-

दीनां महत्त्वामहत्त्वादिविशेषः सिद्ध एव, नच जीवानां कारणभेदः सिद्धः शुक्रशोणितादेरविशेषात् , कारणभेदमन्तरेण च कार्यभेदे विश्वस्याहेतुकत्वप्रसङ्गः, अहेतोश्च देशकालाकारनियमायोगादित्युक्तम् । ननु शुक्रशोणितादीनामपि स्वरूपभेदोऽस्त्येव । यद्येवं, घटपटवत् भिन्नत्वात् भिन्नरूपमेव सर्वदा कार्यं कुर्युरिति कार्याणां जीवतया समानरूपतानुपपत्तिः । न शुक्रशोणिताद्यात्मना कारणानामपि सदृशत्वात् इति चेत् तर्हि कार्याणामपि सदृशत्वं स्यात् इति जीवानामृद्धिमत्त्वेतरत्वादिविशेषो न स्यात् । ननु सदृशत्वेऽपि अयस्कान्तमण्यादीनामिव तेषां केषांचित् काश्चित् अदृष्ट एव धनाद्याकर्षकः स्वभावोऽस्तीति । ननु सोऽपि अहेतुको न संभवतीत्युक्तम् । यद्येवमदृष्टहेतुको भविष्यति । न तर्हि अदृष्टकारणप्रतिक्षेप इति यत्किञ्चिदेतत् ॥

एवं बीजादीनां कर्तृत्वमभ्युपगम्योक्तम् । अधुना तु तदेव न संभवतीत्याह

**नाचैतन्यात्प्रवृत्तिः स्यात्**
**स्वातन्त्र्याद्बीजकर्मणाम् ॥ १५ ॥**

प्रवृत्तौ च निवृत्तौ च कारकाणां य ईश्वरः स स्वातन्त्र्यात्कर्तेत्युक्तम् । न चाचेतनानां तत्र स्वातन्त्र्यमतः कारणत्वेऽपि न कर्तृता ॥ १५ ॥

अचेतनस्यापि कर्तृत्वं दृष्टमिति पराभिप्रायमाह

पयोवच्चेत्

यदाहुः सांख्याः

'वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य ।
पुरुषविमोक्षनिमित्तं तथा प्रवृत्तिः प्रधानस्य ॥' [सां० का० । ५७]

इति ॥

अत्रोत्तरमाह

न साध्यत्वा-
न्मृद्दण्डादेरदर्शनात् ।

नहि पयसः स्वातन्त्र्यं सिद्ध्यति अचेतनत्वात्, मृद्दण्डादिवत् तदपि कर्तृप्रयुक्तमेवेत्युक्तम् ।

ननु सत्त्वतमसोरक्रियारूपत्वे रजसः क्रियात्मकत्वेनोपगमात् परस्परोपकारस्वभावत्वाच्च प्रदीपादीनामिव गुणानां कर्तृत्वं भविष्यति । यदुक्तम्

'प्रीत्यप्रीतिविषादात्मकाः प्रकाशप्रवृत्तिनियमार्थाः ।
अन्योन्याभिभवाश्रयजननमिथुनवृत्तयश्च गुणाः ॥' [सां० का० १२]

इति । एतत्प्रतिषेद्धुमाह

अङ्गाङ्गित्वं च सत्त्वादेः
स्वाभाव्यान्नोक्तहेतुतः ॥ १६ ॥

अचेतनत्वादेव तेषां न स्वभावतः परस्परोपकारः, किन्तु प्रदीपादिवदेव चेतनकर्तृप्रयुक्तानामिति नाचेतनस्य कर्तृत्वसिद्धिः ॥ १६ ॥

किंच

स्थित्वा क्रिया च बीजस्य
नाचितश्चेतनं विना ।

यो यः स्थित्वा प्रवर्तते स चेतनाधिष्ठितो यथा घटादिः । समस्तविकारोपसंहारेण च महाप्रलये स्थितिमनुभूय सर्गादौ प्रवर्तते प्रधानम् । अतस्तस्यापि चेतनान्तरेणाधिष्ठात्रा भवितव्यमितीश्वरासिद्धिः ॥

अत्र परः

ननु ज्ञानं प्रधानेऽस्ति

प्रधानकार्यस्य बुद्धेर्ज्ञानाभ्युपगमात् प्रधानमपि ज्ञानात्मकं सिध्यतीति किमन्यदनुमीयते । यदुक्तम्

‘ अध्यवसायो बुद्धिर्धर्मो ज्ञानं विराग ऐश्वर्यम् ।
सात्विकमेतद्रूपम् ’ [ साङ्ख्यका० २३ ]

इति ॥

एतदपि प्रतिक्षिपति

नाचैतन्यान्मृदादिवत् ॥ १७ ॥

तदयुक्तं व्यक्ताव्यक्तयोरचेतनत्वेन भवद्भिरुक्तत्वात्

'त्रिगुणमविवेकि विषयः सामान्यमचेतनं प्रसवधर्मि ।
व्यक्तं तथा प्रधानम् ।' [साङ्ख्यका० ११]

इति ॥ १७ ॥

कथं तर्हि तत्कार्ये बुद्धौ ज्ञानं भवद्भिरिष्यत इत्याह

**अस्तु वा शक्तिरूपत्वा-
दग्राहि तदसत्समम् ।**

बुद्धौ ज्ञायतेऽनेनेति ज्ञानं प्रकाशात्मकमस्माभिरभ्युपगम्यते, नतु ज्ञप्तिरूपमेव तस्य पुरुषैकस्वभावरूपत्वात् । तथाभूतमपि तत् प्रधाने कारणात्मनि न व्यक्तम्, अपितु शक्त्यात्मनावस्थितमिति अध्यवसायात्मनः स्वकार्यस्याकरणादसत्समम् । ततश्चाध्यवसायात्मनोऽपि ज्ञानस्याभावान्नास्य कर्तृत्वमिति कर्त्रन्तरसिद्धिः ॥

यदुक्तम्

'स्थित्वा क्रिया च बीजस्य नाचितश्चेतनं विना ।'

इति तदनैकान्तिकमिति सांख्याः

**स्थित्वा व्याप्रियमाणत्वात्
शम्भोरपि परेरणम् ॥ १८ ॥**

नवा बीजस्य

युष्मत्परिकल्पितस्यापीश्वरस्य स्थित्वा क्रिया च विद्यते, न च घटादिवत् चेतनाधिष्ठितत्वमिति अनैकान्तिकत्वादस्य हेतोर्नातः प्रधानस्यापि चेतनाधिष्ठितत्वम् ॥

कारिकाभागेनानैकान्तिकत्वं परिहरति

नो साम्यं
प्रज्ञावानीश्वरो यतः ।

अत्र हि प्रकरणादाचैतन्यं हेतुविशेषणं गम्यत इति नानैकान्तिकता ॥

ननु कार्यानेकत्वं कर्त्रनेकत्वेन व्याप्तमित्यत्रापि घटपटादेरिव तनुकरणभुवनादेः कार्यस्यानेकत्वात् पाचकादिवत् स्वपरप्रयुक्तानेककर्त्रनुमानं युक्तमतो नेश्वरसिद्धिरिति । यदाह मण्डनः

‘ सन्निवेशादिमत्सर्वं बुद्धिमद्धेतु यद्यपि ।
प्रसिद्ध्येत्सन्निवेशादेरेककारणता कुतः ॥ ’

इति परमतमुपक्षिप्य पराकरोति

अनेकं देवदत्तादि
दृष्टं लोके धियान्वितम् ॥ १६ ॥

स्थित्वा प्रवर्तमानं हि
पाकादाववपेरितम् ।
परेरितमपीत्यस्मात्
संशयो न महेश्वरे ॥ २० ॥

भवेदेतत्, यदि परस्पराङ्गभावोऽस्य तनुकरणभुवनादेः कार्यजातस्य सिद्धो न भवेत्। तस्मिंस्तु सति प्रासादाद्यवयवात्मनः कार्यजातस्य स्थपत्यादिरिव एक एव सातिशयज्ञानादियुक्तः कर्ता सिद्ध्यति न बहव इत्यदोषः। अतश्च यदप्याह

'रथाद्यवयवा नानातक्षनिर्मापिता अपि।
दृश्यन्ते जगति प्राय उपकार्योपकारकाः ॥'

इति तदनेनैव प्रतिक्षिप्तमेकबुद्ध्या विना नानाकर्तृनिर्मापितानामपि रथाद्यवयवानामुपकार्योपकारकभावासिद्धेः ॥ २० ॥

यद्येवं सोऽपि स्थपत्यादिवदन्यप्रयुक्तो भविष्यतीति, एतत्तिरस्कृतये हेतुमाह

उपरिष्टाद्यतो देवं
वक्ष्यामोऽतिशयाङ्कितम्।

यतस्तमेव परप्रकर्षयुक्तं प्रतिपादयिष्यामः, ततो नैष दोष इति ॥

परोक्तं चोद्यद्वयमन्यदपि दर्शयति

आस्ते प्रतीक्षमाणस्तु
सुप्ते जगति किं हरः ॥ २१ ॥

सर्वदा येन सर्गादि
स्वतन्त्रोऽपि करोति हि।
अनुकम्पापरत्वाच्च
सुखाद्येव सृजत्वसौ ॥ २२ ॥

मोहदुःखादि यत्पुंसां
कुरुते तन्न युज्यते।

प्रयोजनवशेन प्रेक्षावन्तः कार्यं कुर्वन्ति। नच तस्य महाप्रलये प्रजापतेः सर्गाकरणे प्रयोजनमुत्पश्यामः। यदाहुः

'प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते।' [श्लो० वा० सं० प० ५५]
'न च प्रयोजनं तेन स्यात्प्रजापतिकर्मणा।' [श्लो० वा० सं० प० ६८]

इति। अथ दययैव सर्वदा प्रवर्तते नात्मप्रयोजनेनेत्युच्यते, तत्राप्याहुः

'सृजेच्च शुभमेवैकमनुकम्पाप्रयोजितः।
अथाशुभाद्विना सृष्टिः स्थितिर्वा नोपपद्यते॥

'आत्माधीनाभ्युपाये हि भवेत्किं नाम दुष्करम् ।' [श्लो० वा० सं० प० ४३]
'जगच्चासृजतस्तस्य किं नामेष्टं न सिद्ध्यति ॥' [श्लो० वा० सं० प० ४४]

इति ॥

एतस्य तावच्चोद्याभासत्वमाह

नहि सन्मानसिद्धत्वा-
दसत्त्वं परिकल्प्यते ॥ २३ ॥

चोद्यैरित्थंप्रकारैस्तु
परैरुपहृतैरपि ।

नहि प्रमाणसिद्धं वस्तु पुरुषकल्पनाभिरन्यथा कर्तुं शक्यं तासां तत्प्रतिबन्धाभावेन तत्राप्रवृत्तेः । यदाहुः

'अविकलमनुमानं विद्यते कर्तृसिद्धौ
यदि चपलविकल्पैरीदृशैः कार्यसिद्धिः ।
अविकलमनुमानं नास्ति वा कर्तृसिद्धौ
यदि चपलविकल्पैरीदृशैः कार्यसिद्धिः ॥'

इति ॥

तत्र प्रथमं चोद्यमपाकरोति

बीजानामङ्कुरकरं
कालक्षेत्राद्यपेक्षते ॥ २४ ॥

यथा कृषीवलो लोके
तथैव परमेश्वरः ।

पुंसां संभोगकालं तु
परिपाकं च कर्मणाम् ॥ २५ ॥

जगत्प्रसूतिकालं च
जगद्योनेरपेक्षते ।

अविरतानन्तभोगसाधनत्वेनापचिततरशक्तिकत्वात् प्रकृतेः कार्यकारणानामिव क्षेत्रादीनामिव वावश्यं सर्वकार्योपसंहारेण कस्यांचिदपि दशायां विश्रमः प्रलयाभिधानोऽभ्युपगन्तव्य इति वक्ष्यामः । तत्र चास्य भोगसाधनक्षमत्वोत्पादनं कृषीवलादेः क्षेत्रबीजादिप्रतीक्षायामिव प्रयोजनमिति न निष्प्रयोजनता ॥

द्वितीयमपि चोद्यं परिहरति

येन यादृग्विधं कर्म
कृतं तस्य तथाविधम् ॥ २६ ॥

विदधाति फलं पुंसः
कर्मापेक्षितया प्रभुः ।

नास्माभिरीश्वरात् सुखदुःखादिफलं पुंसामद्वैतवादिभिरिवेष्यते येनैष दोषः स्यात् । यदुक्तम्

'न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम् ।
जोषयेत्सर्वकर्माणि विद्वान्युक्तः समाचरन् ॥' (भ० गी० ३ । २६)

इति। अपितु ज्योतिष्टोमब्रह्महत्यादेर्वस्तुभूतात्स्वकर्मतः शुभाशुभादनुष्ठितादिति कोऽयं पर्यनुयोगः। यद्येवं पुरुषव्यापारादेव फलमिति किमीश्वरेण। सत्यं, यदि कर्मसमनन्तरमेव भोजनादेरिव ज्योतिष्टोमादेः फलं दृष्टं भवेत्, तत्रामुत्रिकं फलं नैहिकमिति तस्यापि कार्यत्वे सति कालान्तरभावित्वात् कृष्यादिफलस्येव संविधानरक्षादिकर्त्रा पुरुषमात्रस्य वक्ष्यमाणनयेनासंभवात् ततः सातिशयज्ञानादिमतान्येन भाव्यमिति कर्मसद्भावेऽपि ईश्वरसिद्धेरदोषः॥

अथानन्तपुरुषकर्मफलसंविधानादावस्य प्रयोजनाभावात् प्रवृत्तिरयुक्ता। यदाहुः

'बहुव्यापारतायाश्च क्लेशो बहुतरो भवेत्। [श्लो० वा० सं० प० ५६]

इति। अत्राप्याह

इदमेव दयालुत्वं
यत्तथैवोपपादयेत्॥ २७॥
अन्यथा कर्मवैफल्यं
हरासत्त्व इवापतेत्।

न। अत्र दययैवाप्राप्तानाथपालन इव नृपत्यादेः प्रवृत्तिसिद्धिः। अन्यथा प्रयोजनाभावात् तस्यात्र प्रवृत्त्यनभ्युपगमे संविधानादिकर्त्रा विना कालान्तरभाविफलानां

कृष्यादीनामिव कर्मणां वैफल्यमीश्वराभावपक्ष इव भवेदिति संसारस्याभावात् 'नामिश्रं परिणमते' इति न्यायेन मलस्याप्यपरिणतेर्मोक्षाभाव इति सर्वोच्छेदप्रसङ्गः ॥

अत्र परः

अस्वातन्त्र्यप्रसङ्गः स्या-
न्ननु कर्माद्यपेक्षिणः ॥ २८ ॥

सापेक्षो ह्यसमर्थो भवति । यदाहुः

'तथा चापेक्षमाणस्य स्वातन्त्र्यं प्रतिहन्यते ।' [श्लो० वा० सं० प० ४४]

इति ॥

एतत् परिहरति

स्वातन्त्र्यान्याप्रयोज्यं य-
त्स्वयमन्यत्त्वपेक्षते ।
प्रयुङ्क्ते करणादीनि
तैश्च नैव प्रयुज्यते ॥ २९ ॥

कर्तुः स्वातन्त्र्यमेतद्धि
न कर्माद्यनपेक्षिता ।

नृपत्यादीनां हि अन्येन स्वातन्त्र्येणाप्रयोज्यत्वं यत्

यच्च स्वयमेव गजतुरगादिसाधनानामाहरणमाहृतानां च यथोपयोगं नियोगस्तत् स्वातन्त्र्यमुच्यते, नतु निग्राह्यानुग्राह्यकर्मानपेक्षयैव निग्रहानुग्रहकर्मानुष्ठानम् । उन्मादो हि स कथ्यते नतु स्वातन्त्र्यमिति । एवं भगवतोऽपि कर्मापेक्षितया न स्वातन्त्र्यहानिरन्यप्रयोज्यत्वाभावादिति ॥

अत्राहुः 'यो यत्कर्तृस्वभावः स तत्करोत्येव यथा वह्निरौष्ण्यम्, न चेश्वरो महाप्रलये कार्यं करोतीति न कर्तृस्वभावः' इति । एतत् प्रतिक्षिपति

न च कृत्स्नोपसंहारेऽ-
प्यास्ते सर्वक्रियोज्झितः ॥ ३० ॥

जगच्छक्त्यात्मना धत्ते
जगद्योनिं च निष्क्रियाम् ।
विपाचयति कर्माणि
पुंसो विश्रमयत्यपि ॥ ३१ ॥

अनुगृह्णात्यनुग्राह्या-
न्निरोध्यान्निरुणद्ध्यपि ।

जगत् जन्मगमनादियुक्तं तत्त्वभावभूतभुवनात्मकं कलादिक्षित्यन्तं सर्वमेव व्यक्तिरूपतया उपसंहृत्य शक्त्यात्मना तत्प्रकृतिं च तदानीमुपसंहृतजगद्व्यापारां धत्त इत्युक्तमाचार्येण सत्कार्योपन्यासतो भोगमोक्षे । कर्माणि

च तदानीं मन्दवेगतया प्रकृतिसंस्कारीभूतानि पाचयति, पुरुषांश्च भवरमणखिन्नान् विश्रमयति, तदानीं परिणतमलांश्च कांश्चिदनुग्राहयति, विज्ञानकेवलप्रलयकेवलयोरपि अनुग्रहस्य श्रुतत्वात्, निरोध्यांश्चापरिणतमलान् निरुणद्धि, — इत्यसिद्धत्वात् हेतोरस्य नाकर्तृत्वसिद्धिरीश्वर इति । श्रीमृगेन्द्रेऽपि उक्तम्

'स्वापेऽप्यास्ते बोधयन्बोधयोग्या-
न्रोध्यात्रुन्धन्पाचयन्कार्मिकर्म ।
मायाशक्तीर्व्यक्तियोग्याः प्रकुर्व-
न्पश्यन् सर्वं यद्यथा वस्तुजातम् ॥'

—०:-=*=-:०—

इति नारायणकण्ठसूनोः भट्टरामकण्ठस्य कृतौ
नरेश्वरपरीक्षाप्रकाशे ईश्वरपरीक्षा नाम
द्वितीयं काण्डम् ॥ २ ॥

—=०:*:०=—

अथ



# तृतीयं काण्डम्



तदियता स्वदर्शनासिद्धमीश्वरं प्रमाणतः प्रतिपाद्य परदर्शनप्रसिद्धेश्वरस्वरूपं तत्प्रतिक्षेपायाह

**परात्मा सर्ववित्तस्मा-**
**च्चिदचिन्ति भवन्ति च ।**

सर्वज्ञः सर्वकर्ता च भवद्भिरीश्वरः कथ्यते, स च परमात्मैव समस्तचेतनाचेतनोपादानकारणभूतोऽस्तु, किं व्यतिरिक्तेनेश्वरेणेति परिणतवेदान्तविदः । तथा च श्रुतिः

'पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यम्' (ऋ० वे० । १० । ९० । २)

इति । ननु चेतनानां नित्यत्वमुक्तमतः कथं ततो भावः । सत्यम्, अभ्युपगम्यापि एतदुच्यते इत्यदोषः ॥

एतत्प्रतिक्षिपति

**तस्मिंश्च बीजमुख्ये तु**
**सर्वमुक्तमनुक्तवत् ॥ १ ॥**

युक्तमेतत्, यदि बीजतयोपादानकारणत्वेनासौ अभ्युपगतो भवद्भिर्न भवेत्, तथाभूते तु तस्मिन्नभ्युपगते सर्वमेतन्नोपपद्यत एव ॥

तत्रैतावन्नोपपद्यत इत्याह

**न निमित्तं विनैकत्वा-**
**त्तद्बीजं कार्यकृन्मतम् ।**

यद्बीजं तत्सहकार्यपेक्षया कार्यजननस्वभावं न केवलमेव; यथा शाल्यादिबीजम् । जगतो बीजं च परमात्मा भवद्भिरिष्यते, न च तस्यान्यः सहकारी भवति पुरुष एवेदं सर्वमित्यभ्युपगमतो द्वैतपक्षस्य प्रतिक्षिप्तत्वात् ततो जगल्लक्षणकार्यानुपपत्तिरेव । तदुक्तम् 'नामिश्रं परिणमते' इति ॥

न च कोशकारेणायमनैकान्तिको हेतुरित्याह

**यतो लालाकुविन्दोऽपि**
**स्तम्भादिकमपेक्षते ॥ २ ॥**

सोऽपि हि लालामात्रेण कोशमभिरचयन् स्तम्भाद्याधारमपेक्षत एव । यदुक्तं जैमिनीयैरपि

'न च निःसाधनः कर्ता कश्चित्सृजति किञ्चन ।
नाधारेण विना सृष्टिरूर्णनाभेरिवेष्यते ॥
प्राणिनां भक्षणाच्चापि तस्य लाला प्रवर्तते ।' [श्लो० वा० सं० प० ५१]

इति ॥ २ ॥

किंच विरुद्धयोरेकोपादानता नोपपद्यत इत्याह

चिदचिज्जनकत्वाच्च
चिदचिद्धर्मभाग्भवेत्।

यथाभूतं हि कार्यं तथाभूतमेव तस्योपादानकारणं यथा हेममृदादिस्वभावस्य रुचकघटादेः हेमादि, चेतनाचेतनं च कार्यं परमात्मोपादानं भवद्भिरिष्यते इति तस्यापि चेतनाचेतनविरुद्धस्वभावताप्रसङ्गः। न, अतथाभूतादपि सूर्यकान्तादेर्वह्न्याद्युत्पत्तिदर्शनतोऽनैकान्तिकत्वात्। न, अत एव सूर्यातपस्यैव सूर्यकान्तसहकारिणस्तत्रोपादानकारणत्वात्। एतेन चन्द्रकान्तादपां व्यजनादेश्च पवनादीनामुत्पादे चन्द्रप्रभापवनादीनामेव चन्द्रकान्तव्यजनादिसहकारिणामुपादानत्वमनुसन्धेयम्। अववरकादिष्वपि तूलादिभ्रमणतः पवनसत्तासिद्धेः। गोमयादेर्वृश्चिकोत्पादेऽपि अस्माकं चेतनस्यानुत्पादात् तच्छरीरोपादानकारणसादृश्यमस्त्येवेत्यनैकान्तिकत्वाभावात् अत्र चेतनाचेतनविरुद्धस्वभावताप्रसङ्गस्तदवस्थ एव ॥

किमत इत्याह

एकस्मिन्नेव काले च
तद्विरोधान्न तद्भवेत्॥ ३ ॥

विरुद्धयोश्च तयोर्विरोधादेव भावाभावयोरिव नैकत्र युगपत् संभव इति तस्यापि एकस्य विरुद्धद्वयस्वभावस्यासंभव एव ॥ ३ ॥

चेतनस्योपादानत्वाभ्युपगमेनैतदुक्तमधुना तु तदेव नोपपद्यते इत्याह

**उपादानत्वतस्तद्धि**
**तत्त्वादिवदचेतनम् ।**
**प्रयोजनमतः कार्ये**
**प्रज्ञावन्तमपेक्षते ॥ ४ ॥**

उपादानकारणं ह्यचेतनस्वभावमेव यथा मृदादि , उपादानकारणं च परमात्माभिधानं भवद्भिरिष्यते इति तदप्यचेतनमेव , अचेतनं च चेतनाधिष्ठितं कार्यकरणस्वभावं मृदादि निश्चितमतस्तस्यापि चेतनेनाधिष्ठात्रा भवितव्यमिति ईश्वरसिद्धिः । कथं तर्हि 'पुरुष एवेदं सर्वम्' इति श्रुतिः । अत एव तादर्थ्यात् 'आयुर्घृतम्' इतिवदुपचारेण इत्यविरोधः ॥ ४ ॥

अन्ये तु

'महतः परमव्यक्तमव्यक्तात्पुरुषः परः ।
पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिः ॥' [कठोप० ३ । ११]

इत्यादिश्रुतिसिद्धं पुरुषस्यैवात्रेश्वरत्वमतः किमन्येनेत्याहुः । तान् प्रतिक्षिपति

आत्मानुत्पन्नदेहादि-
रभिन्नाव्यक्तदृक्क्रियः।
बीजाद्यतो न जानाति
नच किञ्चित्करोति च ॥ ५ ॥

पुरुषोऽप्यनुत्पन्नकार्यकरणः स्वदेहादौ हेतुर्वा स्यात् उत्पन्नकार्यकरणो वा। तत्र बीजादव्यक्ताख्यादनुत्पन्नं देहादि यस्य, अभिन्नेऽव्यतिरिक्तेऽनभिव्यक्ते च दृक्क्रिये यस्य स यतः सुषुप्तावस्थनरवन्न किञ्चिज्जानाति करोति वा ततः कथं स्वदेहादेः कर्ता ॥ ५ ॥

नापि द्वितीयः पक्षः प्रत्यक्षविरोधादित्याह

न चापि लब्धदेहादिः
स्वदेहादेः स कारणम्।
संसिद्धमेव तत्तस्य
कुतश्चिद्दृश्यते यतः ॥ ६ ॥

नहि परपुरप्रवेशिनो योगिन इवात्मनः सदेहस्य स्वदेहान्तरकर्तृत्वं दृष्टं तद्देहादि तस्य पित्रादेर्हेत्वन्तरादेव दृश्यते यतः ॥ ६ ॥

किंच

निमित्तफलजातीनां
देहादेश्चाप्यबोधतः।

बीजादीरणसामर्थ्य-
विरहान्न परस्य च ॥ ७ ॥

यो हि कर्ता स कार्यस्य घटादेरिव मूल्यादि निमित्तमुदकधारणादि फलं मृदाद्युपादानं शरीरचक्रादि तु सहकारि जानन् कर्तृस्वभावः सिद्धः । न च पुरुषः स्वशरीरस्य निमित्तं प्रागर्जितानि कर्माणि विचित्रभोगात्मकं फलं विशिष्टशुक्रशोणिताद्युपादानमाहारादि सहकारि च ज्ञातुं शक्त इति तदनवबोधात् हेतोरस्य स्वशरीरनिमित्तबीजादिप्रेरणसामर्थ्याभावतः परस्यापि लब्धदेहस्य पुरुषस्याकर्तृकत्वमिति ॥ ७ ॥

स्वसिद्धेन भवतामत्रानैकान्तिकत्वमिति परः

अदृष्ट्वैव मनो यद्व-
न्नियुङ्क्ते पुद्गलस्तथा ।
नियोक्ष्यते हि कर्मादीन्

यथैवान्तःकरणं स्वरूपेणाज्ञात्वा पुरुषो नियुङ्क्ते इति भवद्भिरिष्यते तथैव बीजकर्मादीनपि स्वशरीरहेतूनज्ञात्वा प्रयोक्ष्यत इत्यज्ञातृत्वस्याकर्तृत्वासिद्धावनैकान्तिकता ॥

कारिकाभागेनैतत्परिहारः

असिद्धत्वानुसाधनम् ॥ ८ ॥

भवेदनैकान्तिको यद्यन्तःकरणस्यादृश्यत्वमस्माकं सिद्धं स्यात् तत्तु वृत्त्यात्मना सर्वदा ज्ञानशक्तेर्ज्ञेयमेवेत्युक्तं तत्त्वसंग्रहे

'रविवत्प्रकाशरूपो यदि नाम महांस्तथापि कर्मत्वात्।
करणान्तरसापेक्षः शक्तो ग्राहयितुमात्मानम्॥'

इति। तस्यापि ज्ञातस्य प्रेर्यत्वात् ज्ञानं विनात्र कर्तृत्वानुपपत्तिरेव॥

अभ्युपगम्यान्तःकरणस्यादर्शनमनैकान्तिकत्वं परिहरति

**तत्रापि प्रेरको ज्ञाता**
**शर्वस्तस्यामितो यतः।**

कार्यत्वात्तस्यापि घटादेरिव चेतनेन प्रेरकेण भवितव्यमितीश्वरसिद्धिः। तथाच श्रुतिः

'धियो यो नः प्रचोदयात्।' [ऋ० वे० ३। ६२। १०।]

इति। नैयायिका अणुमनसोराद्यं कर्मादृष्टकारितमिति।

**अत एवेश्वराधीनः**
**पुमान्भोगेऽपि पठ्यते॥ ९॥**

तथा चाहुः

'न देवा दण्डमादाय रक्षन्ति पशुपालवत्।
यं हि रक्षितुमिच्छन्ति बुद्ध्या संयोजयन्ति तम्॥'

इति ॥

अत्र चोदयन्ति

पितरौ ननु पुत्रादेः
कुरुतो भोगसाधनम् ।

माता च पिता च तावेव यतः पुत्रस्य दुहितुर्वा शरीरमुत्पादयन्तौ दृष्टौ, अतः कथं नात्र पुंसः कर्तृत्वमिति ॥

एतत् प्रतिक्षिपति

न देहमात्रतः स्थूला-
द्व्यतिरिक्तं कलादिकम् ॥ १० ॥

तद्योगं वृत्तिलाभं च
नित्यव्यापकपक्षयोः ।
अयोनिजं च तौ कार्यं
कुर्यातां नो परस्य हि ॥ ११ ॥

स्थूलमेव देहं तावुत्पादयन्तौ सिद्धौ नतु व्यतिरिक्तमिन्द्रियादि, नापि शरीरेन्द्रियाभ्यां पुंसो योगं, नापि च नित्यत्वात् व्यापकत्वात्मनः सर्वशरीरयोगेऽपि विशिष्टेनैव शरीरेण तज्ज्ञानक्रिययोर्वृत्तिलाभं कुरुतः, नाप्ययोनिजं मषकमक्षिकादिशरीरं तौ कर्तुं सं-

भाव्येते हीति यस्मात् तस्मात् न युष्मत्परिकल्पित-स्यास्य बुद्ध्यादेः परस्य पुंसोऽत्र कर्तृत्वमित्यध्याहारः ततः कर्त्रन्तरसिद्धिः ॥ ११ ॥

एवं स्थूलशरीरकर्तृत्वमभ्युपगम्यैतदुक्तं तदेव तु नोपपद्यते इति दर्शयितुं पराशङ्कामाह

पितरौ किं न कुर्वाते
शरीरोत्पत्तये बुधाः ।
बीजसंबन्धमात्रं चेत्

यथा बीजसंबन्धमात्रेणैव तयोः शरीरे कर्तृत्वमेव-मिन्द्रियादावपि भविष्यतीति कुतः कर्त्रन्तरसिद्धिः ॥

कारिकाभागेनैतत् प्रतिक्षिपति

तावता नैव तत्कृतम् ॥ १२ ॥

कायादेः कार्यादन्यत्वात् तत्कारकबीजसन्निधानात्मनः कार्यस्य ॥

तथाहि

मृच्चक्रमात्रयोगेन
कलशो न कृतो भवेत् ।

नहि अन्यस्मिन् कृतेऽन्यत् कृतं भवति ॥

तदेवानयोरन्यत्वमाह

**रचना तत्र कर्तव्या**
**नानार्थाराधनक्षमा ॥ १३ ॥**

मृदोऽन्यदेवोदकधारणाद्यर्थकारि घटस्य स्वरूपं यतः ॥
दार्ष्टान्तिकेऽप्यन्यत्वं योजयति

**तथा कार्येऽपि रचना**
**पुमर्थाराधनक्षमा ।**
**दृष्टा सातः परिज्ञेया**
**कर्तृतः कुशलाद्बुधैः ॥ १४ ॥**

एवं बीजसंयोगरूपात् कार्यादन्यदेव नानाभोगसाधनं कार्यमिति तस्यान्येनैव सातिशयेन कर्त्रा भवितव्यमिति ।

अत्र कारिकाभागेन पराभिप्रायः

**बिम्बात्मा चेत्**

शुक्रशोणितयोः कललावस्थात्यागेन घनावस्था बिम्बमुच्यते, तस्मादेवाहाराद्युपकृतात् सा रचना न कर्त्रन्तरादिति ॥

पर एतत् प्रतिक्षिपति

**न तत्रैव**
**ह्यन्यादृगपि दृश्यते ।**

न बिम्बमात्रात्तस्याविशेषादेकरूपैव पुत्रादेः सर्वस्य रचना स्यादिति दृष्टविरोधः ॥

पुनः कारिकाभागेन परः

**मरुतश्चेत्**

पवनस्यैव सर्वत्र रचनाकर्तृत्वसिद्धेः ॥

आचार्य आह

**न तस्यापि**
**स्वातन्त्र्यं चितिहानितः ॥ १५ ॥**

**पूर्वत्रापोदितं सम्यक्**
**स्वातन्त्र्यं बीजकर्मणोः ।**

यथा बीजस्योपादानकारणस्य कर्मणश्चाचैतन्यात् कर्तृत्वं निषिद्धं द्वितीयस्मिन् काण्डे तथा पवनस्यापि निषेद्धव्यमेव ।

किंच

**न चाप्येवंविधं कार्यं**
**प्रकृष्टज्ञानबुद्धिना ॥ १६ ॥**

**तेषु तेषु प्रदेशेषु**
**स्वर्गादेर्येन न स्थितिः ।**

येषु येषु स्थितं तत्स्या-
दण्वर्थकृतयेऽक्षमम् ॥ १७ ॥

नहि एवंविधलक्षणं शरीरादि कार्यं प्रकृष्टतरज्ञानादियुक्तकर्त्रा विना संभवति येन तेषु तेषु अत्र शरीरे श्रोत्रनेत्रादिषु नवद्वारेषु त्वगादेः, आदिग्रहणात् नेत्रादेः पादतलादिषु स्थितिर्न दृश्यते येष्ववस्थितं पुरुषार्थसाधनायासमर्थं भवेदिति न किञ्चिज्ज्ञयोः पित्रोरत्र कर्तृत्वम् ॥ १७ ॥

अत्र पुनः परः

स्वर्गाद्युद्देशतः कर्म
कुर्वतैव नरेण तत् ।
प्रयुक्तं तच्च देहाद्यै-
र्न विना फलसाधकम् ॥ १८ ॥

अतोऽभिसन्धिमात्रेण
पुंसा सर्वं कृतं त्विति ।

न वयं साक्षात् पुरुषस्य शरीरादिसर्वकर्तृत्वं ब्रूमः येनैष दोषः स्यात् अपितु 'ज्योतिष्टोमेन यजेत' इत्यादि श्रुतिसिद्धं स्वर्गादि कर्म कुर्वता तदपूर्वाख्यसंस्कारद्वारेण प्रयुक्तम् तत्तु हरीतक्यादि विशिष्टपरि-

णामाक्षेपेण विरेकादिफलमिव शरीराद्याक्षेपेण स्वफलं स्वर्गादि साधयतीति फलाभिसन्धानेन ज्योतिष्टोमादि-मात्रमेव कुर्वता पुरुषेण तदाक्षिप्तं सर्वमेव तनुकरणादि कृतमुच्यते न पुनः साक्षात् कर्मणीव तत्रास्य कर्तृत्वं प्रमाणाभावादित्यदोषः ॥

नोद्देशस्यानैकान्तिकत्वादित्याह

**न व्यापकमिदं यस्मा-**
**न्निरयादौ न विद्यते ॥ १९ ॥**

नहि नरकदुःखाद्युद्देशेन ब्रह्महत्यादिकर्म पुरुषैः क्रियते अपितु दृष्टफलानुसन्धानेन कामादेरेवेति नरकफलाद्यनुपपत्तिस्तेषाम् ॥ १९ ॥

अथ

'अवीचौ नरके कल्पं वसेयुर्ब्रह्मघातकाः ।'

इति श्रुत्यन्तरेण तत्कर्तुस्तद्भवतीति उच्यते । भवतु, उत्पादकस्तु अस्य न पुरुषोऽभिसन्धानेन विना कर्तृत्वा-सिद्धेरिति ततोऽन्यः चौरस्य निग्रहादौ नृपतिवदीश्वरो-ऽभ्युपगन्तव्यः । तथाहि

**व्याप्तं यच्चापि कुम्भादि**
**दृष्टं यद्धीमता कृतम् ।**

तत्तावतैव तद्वच्च
निरयादि भविष्यति ॥ २० ॥

यत् कार्यत्वेन व्याप्तं घटादि तत् धीमता कृतं सिद्धम् अतस्तदपि तस्य नरकादि कार्यत्वेनैव घटादिवत् धीमता कृतमिति गम्यते ॥ २० ॥

न च व्यवहितफलोद्देशेनानुष्ठितानामपि कर्मणां कर्तृव्यापारान्तरानपेक्षया फलजनकत्वेन व्याप्तिः सिद्धेत्याह

नचाप्युद्देशमात्रेण
तृप्तिः स्यात्कर्षणादितः ।
क्रियान्तरं विना तस्मात्
सामग्र्यन्तरतो भवेत् ॥ २१ ॥

तद्वद्धर्मादपि कृता-
त्स्वर्गादि स्यात्क्रियान्तरात् ।
तच्चेश्वरं विना नेति
स सिद्धः परमेश्वरः ॥ २२ ॥

आहारफलाद्यर्थत्वेन हि कृष्यादीनि लोकः करोति न व्यसनितया । न च कृष्टिमात्रादेव तत्तेषां फलम् अपितु तद्वर्धनरक्षणादेर्भोजनान्तात् कर्त्रन्तरव्यापारादपि ।

तद्वत् स्वर्गाद्युद्देशेनानुष्ठितान्न ज्योतिष्टोमादेः कर्ममात्रा स्वर्गोऽपितु तद्भोगयोग्यशरीरादिजननकर्मान्तरसापेक्षादिति तस्यापि कर्मान्तरकर्त्रा सातिशयेन भाव्यमितीश्वरसिद्धिः ॥ २२ ॥

ननु सोऽपि पुरुष एव भविष्यति । यदाहुः

'क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः' [ यो० सू० १ । २४

इति । अत्रापि आह

पुंभिश्चापेक्ष्यमाणत्वा-
त्स चानावृतदृक्क्रियः ।
ततश्चापास्तपुंभाव-
स्तद्वैधर्म्याद्विनिश्चितः ॥ २३ ॥

पुरुषा हि अविद्यावृतत्वात् किञ्चिज्ज्ञाः किञ्चित्कर्तारश्चोच्यन्ते । पुरुषाशक्यशरीरावरणादिकार्याण्यथानुपपत्त्या तु ईश्वरः कल्प्यमानस्तद्विलक्षणोऽनावृतदृक्क्रियः सिद्ध्यति न पुरुषविशेष एव, तस्यापि पुरुषत्वात् तत्रासामर्थ्यं सामर्थ्ये वा न पुरुषत्वं यतः ॥ २३ ॥

पुरुषवादी सिद्धान्तवादिनं प्रत्याह

पुंस्त्वाद्ये कल्पयन्तीशं
सर्वज्ञानक्रियोज्झितात् ।

असिद्धहेतुतस्तेऽतः
स्थिता ह्यात्मनि दर्शनात् ॥ २४ ॥

पुंसः सर्वज्ञत्वादिविरहात् तनुकरणनिर्माणासामर्थ्यमिति अवश्यं तन्निर्माणसमर्थेन सर्वविदान्येन भवितव्यमिति यैः पुरुषविशेषवादिनामस्मादसिद्धादेव हेतोरीश्वरोऽन्यः साध्यते तेऽपि ईश्वरबुद्ध्या आत्मन्येव पुरुषविशेषे व्यवस्थिताः ॥ २४ ॥

कथमित्याह

पुमानेव हि कस्मात्तै-
र्नेष्टोऽनावृतदृक्क्रियः ।
महतापि प्रयत्नेन
यदीशः परिकल्प्यते ॥ २५ ॥

तनुकरणादिकार्यान्यथानुपपत्त्या हि तैः सर्वज्ञत्वादियुक्तः कर्ता कश्चित् कल्पनीयः स च पुरुषविशेष एव कल्प्यो नान्यः । एवं हि न धर्म्यन्तरमपि कल्पितं भवतीति ॥ २५ ॥

सिद्धान्तवादी तु आह

प्रमाणाभावतो नेष्टः
सर्वसर्वज्ञदोषतः ।

भवेदसिद्धो हेतुर्यदि पुरुषविशेषस्येश्वरतायां प्रमाणं स्यात् तत्तु नास्ति असदादिवत् तस्यापि बुद्ध्यादियुक्तत्वेन भवद्भिरभ्युपगमात् तदयुक्तत्वे हि मुक्त एवेश्वरः स्यात् न तु पुरुषविशेष इति असत्पक्ष एव। बुद्ध्यादियोगाच्च सर्वज्ञत्वं तत्पुरुषान्तरेऽपि स्यादिति सर्वस्य सर्वज्ञताप्रसङ्गः ॥

किमत इत्याह

न स्युस्ततश्च शास्त्राणि
लोके चोत्सारकादयः ॥ २६ ॥

स्वात्मना पापकर्तृत्वं
नहि सर्वार्थदर्शिनः।
युज्यते दृश्यते वास्य
दुःखं नानाप्रकारजम् ॥ २७ ॥

ततः सर्वेषां सर्वज्ञत्वात् सर्वस्य शास्त्रपरोक्षाभिधानादेः स्वयमनर्थहेतूपसेवाया नानाप्रकारदुःखवेदनस्य चाभावप्रसङ्गस्तदप्रसङ्गे हि असर्वज्ञा एव पुंमांसोऽभ्युपगन्तव्यास्ततो नासिद्धो हेतुरिति पुरुषव्यतिरिक्तेश्वरसिद्धिः। कथं तर्हि 'पुरुषान्न परं किञ्चित्' इत्यादिश्रुतयः। तदुपकारायैव प्रवृत्तेरीश्वरादेरपि सर्वस्येत्यदोषः ॥ २७ ॥

शास्त्रमेवाकृतकं वेदाख्यं विधिनिषेधात्मकस्वाज्ञाव्यतिक्रमेण पुंसः प्रत्यवायफलं विदधदीश्वरो नान्य इति जैमिनीया इत्याह

**शास्त्रतः कर्मनिष्पत्तिः**
**कर्मतश्च कृतात्फलम् ।**
**शास्त्रं चाकृतकं तेन**
**किं हरेणेति**

एतत् कारिकाभागेन प्रतिक्षिपति

**नार्थवत् ॥ २८ ॥**

नैतत् युक्तम् ॥ २८ ॥

कुत इत्याह

**कर्मसाफल्यकरण-**
**मुक्तं शम्भोः प्रयोजनम् ।**
**उपरिष्टात्प्रवक्ष्यामः**
**पुंमुक्तिकरणं परम् ॥ २९ ॥**

उक्तमेव यतो व्यवहितफलं कर्म कृष्यादिवच्चिदनधिष्ठितं न कार्यं कर्तुं समर्थमिति, वक्ष्यामश्च ॥ २९ ॥

ननु दृष्टे सति नादृष्टकल्पना युक्तेति । अत्राप्याह

स्वर्गादिसिद्धये यद्वत्
स्थैर्यं क्लृप्तं तु कर्मणः।
महेशः कल्प्यतां तद्व-
त्तं विना नापि तद्यतः ॥ ३० ॥

यद्येवं दृष्टदेवतोद्देशात् वह्नौ सोमप्रक्षेपाद्यात्मनो ज्योतिष्टोमादेः पुरुषकर्मणोऽपवृक्तत्वादामुत्रिकफलस्य स्वर्गादेरनुपपत्तिरेव। ननु स्वर्गादिफलश्रुत्यन्यथानुपपत्त्या तददृष्टेन संस्काररूपेणानपवृक्तमिति कल्प्यते तर्हि अदृष्टस्यापि कल्पनासंभवात् ईश्वरोऽपि कल्पनीयस्तेन विना तस्यापि फलजनकत्वासिद्धेरुक्तत्वात् ॥ ३० ॥

अधुना रचनारूपत्वात् शास्त्रस्याकृतकत्वं न संभवतीति तत्प्रामाण्यान्यथानुपपत्त्यावश्यं भवद्भिस्तत्प्रणेता ईश्वरोऽभ्युपगन्तव्य इति दर्शयितुं शब्दनित्यत्वं तावत् प्रतिक्षेप्तुमाह

नित्यं चेद्वर्णजातं स्यात्
सर्वदा किं न गृह्यते।

उपलभ्यस्वभावस्य हि नित्यत्वे स्वभावाविनाशात् सर्वदैवोपलभ्यताप्रसङ्गः ॥

कारिकाभागेन परः

अव्यक्तत्वात्तु

न गृह्यते इत्यनुवर्तते। व्यक्तस्य हि तस्य सर्वदोपलभ्यस्वभावता नाव्यक्तस्य तेनाव्यक्तत्वान्न गृह्यत इति ॥

आचार्य आह

तद्व्यक्ते-

र्नित्यत्वे दोषनित्यता ॥ ३१ ॥

शब्दस्य व्यक्तिरपि यदि नित्या ततः सर्वदा किं न गृह्यते इत्यस्य दोषस्य नित्यतानुपपत्तिरेव ॥ ३१ ॥

कारिकाभागेन पराभिप्रायः

अनित्या चेत्

अथैतद्दोषभयादनित्या व्यक्तिः शब्दस्येति उच्यते।

आचार्य आह

कुतो हेतोः

केन प्रमाणेन भवद्भिरनित्यत्वमवगतम्।

परः प्रमाणमाह

कदाचिद्भावतस्त्विति।

कादाचित्कत्वात् सा व्यक्तिरनित्या विद्युदादिवत् ॥

अत्राप्याह

शब्देऽपि तत्समानत्वा-
दनित्यत्वं न वार्यते ॥ ३२ ॥

यद्येवं स्थानकरणाभिघातादेः स्वकारणस्य भावे शब्दः कदाचित् उपलभ्येत तदभावे च नोपलभ्येत इति विद्युदादिवदनित्योऽस्तु, किमन्यया तद्व्यक्त्या परिकल्पितयेति ॥ ३२ ॥

ननु तदभावेऽनुपलम्भः स्तिमितवायूपरुद्धश्रोत्रत्वात् पुंसो बधिरस्येव शब्दविषयोऽन्यथासिद्धस्तत् न वर्णानित्यत्वसाधनाय पर्याप्त इति । तदयुक्तम्, यतः

मरुति स्तिमिते मानं
न वर्णावरकं क्वचित् ।

स्थानकरणाभिघाताभावकाले विद्यमाना अपि वर्णाः स्तिमितवायूपरुद्धत्वात् श्रोत्रेण न गृह्यन्ते इत्यत्र प्रमाणं नास्त्येव । उद्रिक्ते हि वायौ तत्र शूलादयः स्युरिति स्तिमितग्रहणम् । किंच श्रोत्रोपरोधस्याविशेषात् स्थानकरणाभिघातकालेऽपि वर्णा न श्रूयेरन् ॥

ननु तज्जेन मरुता तदानीमभिव्यक्तत्वात् श्रूयन्ते इति । न, असिद्धत्वादित्याह

पृष्ठस्थार्णाग्रहान्नापि
वर्णानां व्यञ्जको मरुत् ॥ ३३ ॥

प्रकाशको हि व्यञ्जको नावरको विरुद्धत्वात्, वायुश्च वर्णानामावरको दृष्टो यतस्तत्पृष्ठस्थानां वाय्वनुगतानामवर्णानां वर्णानां ग्रहणं नास्ति निवाते हि शब्दग्रहणात् ततो न वायोर्व्यञ्जकत्वसिद्धिः ॥ ३३ ॥

अथ स्थानकरणाभिघातजेन मरुता न वर्णोपलब्धिर्येनैष दोषः स्यादपितु श्रोत्राभ्याशमागत्य श्रोत्रस्तैमित्यं निवर्तते ततो वर्णोपलब्धिरिति । अत्राप्याह

**कम्पाद्यभावतो नासा-**
**वायात इति गम्यते ।**

स्पर्शशब्दधृतिकम्पलिङ्गो हि वायुः, लिङ्गाभावे च वक्तृमुखात् श्रोतुः श्रोत्राभ्याशमागच्छतीति कुतोऽवगम्यताम् ॥

किंच

**कर्णच्छिद्रे हि संपूर्णे**
**सर्वार्णग्रहणं भवेत् ॥ ३४ ॥**

व्यञ्जकेन तेन श्रोत्ररन्ध्रे व्याप्ते सति आवरणस्य निवृत्तत्वात् सर्वशब्दग्रहणप्रसङ्गः ॥ ३४ ॥

अत्र परः

**सामर्थ्यं व्यञ्जकस्येदृग्**
**गम्यते कार्यतः किल ।**

संश्लिष्टमपि नो वर्णान्
व्यनक्त्येकस्य दर्शनात् ॥ ३५ ॥

नित्यत्वे हि शब्दस्य कदाचित् ग्रहणान्यथानुपपत्त्या स्थानकरणाभिघातजस्य पवनस्य श्रोत्रोपकारद्वारेण व्यञ्जकत्वं यथा कल्प्यते तथैवैकैकवर्णोपलम्भात् प्रतिनियतश्रोत्रशक्त्युपकारेण प्रतिनियतस्थानकरणाभिघातजस्य वायोः प्रतिनियतवर्णव्यञ्जकशक्तिकल्पनात् नैष प्रसङ्गः इति ॥ ३५ ॥

एतत् प्रतिक्षिपति

संसिद्धे व्यक्तिकर्तृत्वे
तस्येदं युक्तिमद्भवेत् ।

व्यक्तिकर्तृत्वे व्यञ्जकत्वे तस्य वायोः सिद्धे कदाचित् तस्य विशेषस्य वर्णविशेषव्यञ्जकत्वमुच्यमानं शोभेत तदेव त्वसिद्धमित्युक्तम् ॥

अभ्युपगम्याप्याह

नचायं व्यञ्जको धर्मः
प्रदीपादौ प्रदृश्यते ॥ ३६ ॥

युक्तः चक्षुःश्रोत्रादीनां व्यञ्जकानां रूपशब्दादौ व्यङ्ग्ये शक्तिभेदो विषयभेदात् अस्य तु प्रदीपादेः रूपादिवदेक

एव शब्दो विषय इति तदवान्तरभेदेन शक्तिभेदकल्पन-मयुक्तमेव ॥ ३६ ॥

किंच

**सिद्धे स्थैर्ये तु वर्णानां**
**व्यञ्जकं परिकल्प्यते ।**
**स्थैर्यं तेषां कुतो हेतोः**

सन्तमसे हि स्पर्शादिना घटादीनां सत्त्वे सिद्धे प्रदीपादिर्व्यञ्जकः सिध्यति, तत्सिद्धौ हि मृच्चक्रदण्डादिः कारक एव उक्तः । तदिहापि स्थानकरणाभिघातादीनामभावेऽपि वर्णजातस्य सत्त्वसिद्धौ यदि प्रमाणं भवेत्, भवेदेव तेषां व्यञ्जकत्वम् । तदभावे तु तत्कारकतैव युक्तेति ॥

परः कारिकाभागेनात्र प्रमाणमाह

**प्रत्यभिज्ञानतास्त्विति ॥ ३७ ॥**

स एवायं वर्ण इति स्थिरवस्तुविषयात् प्रत्यभिज्ञानाख्यात् प्रत्यक्षादेव तेषां स्थैर्यमिति ॥ ३७ ॥

एतत् पराकरोति

**सन्दिग्धं प्रत्यभिज्ञानं**
**तदतद्भावदर्शनात् ।**

शब्दे सम्यक्त्वमस्येति
नैतद्धेत्वन्तरं विना ॥ ३८ ॥

तादिति स्थैर्यमतादिति अस्थैर्यं तयोर्द्वयोरपि भावे तस्य प्रत्यभिज्ञानस्य दर्शनात् न विद्मः किमत्र पर्वतादाविव स्थैर्यविषयमेव तदुत धाराज्वालादाविवास्थैर्यविषयत्वात् भ्रान्तमिति सन्देहान्न साधनम् । अतः स्थैर्यसिद्धये प्रमाणान्तरमेव वक्तव्यम् ॥ ३८ ॥

अथ क्वचित् भ्रान्तदर्शनेऽपि प्रत्यभिज्ञानस्य न सभ्रान्तता अनुभूयमानार्थविषयत्वादालोचनज्ञानवत् तदुक्तम्

'स्वतः सर्वप्रमाणानां प्रामाण्यमिति गृह्यताम्[1] ।
नहि स्वतोऽसती शक्तिः कर्तुमन्येन पार्यते[2] ॥'

[श्लो० वा० चो० सू० ४७]

इति, अपितु बाधकसद्भावादेवेति । अत्रापि बाधकं प्रमाणमाह

अनेकत्वमवर्णस्य
गम्यते कखगादिवत् ।
समकालमनेकैस्तु
नरैरुच्चार्यते यतः ॥ ३९ ॥

---

१ गम्यतामिति मुद्रितमूलपुस्तकस्थः पाठः ।
२ शक्यत इति मूलपुस्तकस्थः पाठः ।

प्रतिपुरुषमकारादयो वर्णा भिन्ना युगपद्बहुभिरुच्चार्यमाणत्वात् कचटतपादिवर्णवत् । ननु व्यञ्जकत्वादेषां कारकत्वमासिद्धमेव । सत्यम्, यदि तेषामभावेऽपि वर्णसत्त्वे प्रमाणं स्यात् तदभावे तु अभावसिद्धौ नैषां व्यञ्जकत्वम्, अपितु कारकतैवेत्युक्तं तन्नासिद्धता ॥ ३९ ॥

एवमभ्युपगम्य प्रत्यभिज्ञानं बाधितत्वादसाधनमित्युक्तम्, अधुना तु तदेव नोपपद्यत इत्याह

**प्रत्यक्षं प्रत्यभिज्ञानं**
**नाक्षादुपरताद्यतः ।**
**वर्णेषु वासनाऽव्यक्ति-**
**स्मरणादनुगम्यते ॥ ४० ॥**

नात्र प्रत्यभिज्ञानं प्रत्यक्षमपितु तदाभास एव यतो निर्विकल्पानन्तरत्वेन तद्विषयावसायतया तत्प्रमाणमिष्यते । यदुक्तम्

'अस्ति ह्यालोचनं[१] ज्ञानं प्रथमं निर्विकल्पकम् ।
बालमूकादिविज्ञानसदृशं शुद्धवस्तुजम् ॥' [श्लो० वा० प्र० सू० ११२]
'ततः परं पुनर्वस्तुधर्मैर्जात्यादिभिर्यया ।
बुद्ध्यावसीयते सापि प्रत्यक्षत्वेन संमता ॥' [श्लो० वा० प्र० सू० १२०]

इति । उच्चारितप्रध्वंसित्वेन चोपलम्भात् सर्ववर्णानामि-

---

१ चना ज्ञानमिति मुद्रितपुस्तकस्थः पाठः ।

न्द्रियव्यापारोपरतौ प्रत्यभिज्ञानं भवत् अयमिति पुरोऽवस्थितार्थासंवेदनात् न प्रत्यक्षार्थविषयमपितु अनुभवसंस्कारप्रबोधात्मनः स्मरणादेवोपजायमानं स एवेति परामर्शसारत्वात् प्रत्यक्षाभासमेव । यदुक्तम्

'यदि त्वालोच्य संमील्य[1] नेत्रे कश्चिद्विकल्पयेत् ।
न स्यात्प्रत्यक्षता तत्र सम्बन्धाननुसारतः ॥' [श्लो०वा०प्र०सू० १२८]

इति ॥ ४० ॥

स्यादेतत् प्रत्यभिज्ञान्यथानुपपत्त्या कतिपयकालावस्थायित्वं शब्दस्य भविष्यतीत्याह

कालं न चापि तावन्तं
स्थैर्यं शब्दस्य संभवेत् ।
स्थैर्ये वा सर्वनित्यत्वं
प्रत्यभिज्ञानदर्शनात् ॥ ४१ ॥

एवं धाराज्वालादेरपि सर्वस्य स्थैर्यकल्पनाप्रसङ्ग इति न कश्चिदनित्यः स्यात् ॥ ४१ ॥

उपसंहर्तुमाह

इत्थमक्षरजातस्य
नित्यत्वं नोपपद्यते ।

---

१ तस्येति मुद्रितपुस्तकस्थः पाठः ।

**पदतद्योगवाक्यानां**
**दूरोत्सारितमेव तत् ॥ ४२ ॥**

एवं प्रयोक्तुर्व्यञ्जकत्वासंभवेन कारणत्वात् वर्णाना-मनित्यत्वसिद्धेस्तदारब्धानां पदानां तत्संयोगात्मनश्च वा-क्यव्रातस्याप्यनित्यत्वं सिद्धमिति वेदस्य प्रामाण्यान्य-थानुपपत्त्या ईश्वरः कर्ताभ्युपगन्तव्यो यो बौद्धैः सर्व-ज्ञत्वदुःसाधतया भवद्भिर्न संश्रितः नतु दोषदर्शनेने-ति । यदुक्तम्

'यदि त्वादौ जगत्सृष्टा धर्माधर्मौ ससाधनौ ।
तथा[1] शब्दार्थसम्बन्धान्वेदान्कश्चित्प्रवर्तयेत् ॥
जगद्धिताय वेदस्य तथा किञ्चिन्न दुष्यति ।
सर्वज्ञवत्तु दुःसाधमि[2]ति तैस्तन्न संश्रितम् ॥'
[श्लो० वा० सं० प० ४४]

इति ॥ ४२ ॥

अत्र परः

**अस्थैर्ये पदयोगानां**
**विज्ञातसमयं पदम् ।**
**नष्टमन्यदिदानीं स्या-**
**दर्थज्ञानं ततः कथम् ॥ ४३ ॥**

---

१ यथा शब्दार्थेति मुद्रितपुस्तकस्थः पाठः ।
२ मित्यत्रैतन्न सं, इति मु० पु० पाठः ।

पदानां तत्संयोगात्मनां च वाक्यानामस्थैर्ये सति विज्ञातः समयः सङ्केतो यस्मिन् पदे तत् पदं सुबन्तादि नष्टमन्यदेवाभिनवकविविरचितमुत्पन्नमिति ततोऽकृतसङ्केतात् तस्मादर्थज्ञानाभावप्रसङ्गः ॥ ४३ ॥

उत्तरमाह

**सादृश्यान्ननु नान्यत्वं**
**सारूप्येण निवार्यते ।**
**किं कुर्मः शब्दनित्यत्वे**
**न यतो मानमस्ति हि ॥ ४४ ॥**

शब्दानां हि अनित्यत्वे प्रमाणसिद्धेऽर्थानामिव सामान्यनिबन्धनमर्थप्रत्यायनादिकार्यमुपपद्यत एव । सादृश्यं सामान्यमस्माकं साङ्ख्यानामिवेत्यविरोधः ॥ ४४ ॥

अत्र पराभिप्रायः

**अथास्मादेव नित्यत्वं**
**शब्दानां परिकल्प्यते ।**

अर्थप्रत्यायनान्यथानुपपत्त्या नित्यत्वं शब्दानामुच्यते ॥

तदयुक्तमित्याह

**स्यात्ततोऽग्निनिकोचादे-**
**स्तत्तुल्यत्वान्न नित्यता ॥ ४५ ॥**

अनित्यानामपि अक्षिनिकोचकचाङ्कुशाभिघातादीना-मर्थप्रत्यायनदृष्टेरस्यानैकान्तिकत्वात् ॥ ४५ ॥

एवमपि नेश्वरकर्तृकत्वसिद्धिरत्रेति परः

शास्त्रोज्झितो न कालोऽस्ति
प्रलयो नोपपद्यते ।
प्रभातमपि नैवात-
स्तेन शास्त्रमकृत्रिमम् ॥ ४६ ॥

'ब्राह्मणेन षडङ्गो वेदोऽध्येयः' 'गर्भाधानादिवैदिकसंस्कारसंस्कृतो ब्राह्मण्यां ब्राह्मणाज्जातो ब्राह्मणः' इत्यार्यागमावैलक्षण्येनाधिकारिसंवलनयैव वेदस्य व्यवस्थितेर्बीजाङ्कुरादिप्रवाहवदनित्यत्वेऽपि अनिदंप्रथमत्वमिति । अत एव शास्त्रशास्याद्युज्झितस्य प्रलयाभिधानस्य कालस्य तन्निर्माणादेश्चाहर्मुखस्यासंभवान्नेश्वरकर्तृको वेदः । तदुक्तम्

'प्रलयेऽपि प्रमाणं वः सर्वोच्छेदात्मके नहि ।' [श्लो० वा० सं० प० ६८]

इति ॥ ४६ ॥

एतत् प्रतिविधत्ते

कोटिशो मरणं दृष्ट्वा
जन्तूनामवसीयते ।

संभवत्येव कालोऽसौ
यत्राशेषजनक्षयः ॥ ४७ ॥

मषकमक्षिकादीनामसंख्यातानां जन्तूनां युगपत् सृष्टिः संहारश्च दृष्ट इति सर्वप्राणभृतां जन्तुत्वादेव कस्मिंश्चित् काले युगपत् सृष्ट्या संहारेण भवितव्यमिति सर्गप्रलयसिद्धेरदोषः ॥ ४७ ॥

अत्र पराभिप्रायं कारिकाभागेनाह

कर्म तादृग्विधानं चेत्

कर्मनिबन्धनो हि शरीरादेः संहारो नाहेतुकः न च महाप्रलयनिमित्तं कर्म किञ्चित् श्रूयते इति हेत्वभावादयुक्तः । तदुक्तम्

'नचाप्यनुपभोगोऽसौ कस्यचित्कर्मणः फलम् ।'

(श्लो० वा० सं० प० ७०)

इति ॥

अत्रोत्तरं तद्भागेनैवाह

मरणं नैव कर्मणः ।
किन्तु तत्क्षयतः

शरीरोपसंहारोऽपि उपभोगाभावात्मकत्वान्न कर्मफलम् अपितु उपभोगप्रदकर्मक्षयाक्षिप्त एव तद्वत् सर्वो-

पसंहारोऽपीत्यदोषः । कथं तर्हि 'आयुष्कामो हिरण्यदक्षिणेन यजेत' 'मरणकामः सर्वस्वारेण यजेत' इति । आयुष्यानायुष्यकर्मश्रुतयो भोगप्रदकर्मान्तराक्षेपतदुपसंहारार्था एव नहि भोगं विना केवलमेवायुरुपपद्यते भोगप्रदकर्मसद्भावे वा मरणं यतः ॥

ननु तथापि महाप्रलयानुपपत्तिः कर्मान्तराणां भोगप्रदानां भावादित्याह

स्वापोऽ-

प्यन्यस्यापरिपाकतः ॥ ४८ ॥

कर्मान्तरस्यापरिपक्कत्वात् पूर्वस्य चोपभुक्तत्वात् कियत्कालपरिपाकापेक्षाक्षिप्तः स्वापः सुषुप्ताभिधानोऽयं सिद्धो नतु कर्मफलमिति महाप्रलयस्यापि स्वापात् कर्मपरिपाकाक्षिप्ततैव न कर्मफलतेति । यदुक्तम्

'न चाप्यनुपभोगोऽसौ कस्यचित्कर्मणः फलम् ।'

[ श्लो० वा० सं० प० ७० ]

इति तत् सिद्धसाधनमेव ॥ ४८ ॥

अथ तदानीं कथं कर्मणामविपाकः । विपाकहेत्वसामर्थ्यादित्याह

कोदृशो हि क्षयं दृष्ट्वा

कर्मणामवसीयते ।

समकालं च सर्वेषां
विपाकः संभवत्यपि ॥ ४६ ॥

असंख्यातानां हि मषकमक्षिकादीनां कादाचित्कः सर्गः प्रलयश्च दृश्यमानस्तत्प्रकृतीनामत्यन्तमल्पत्वेन तावन्मात्रोपभोगतोऽपचितशक्तित्वात् सुकुमारतरवनितादेरिव कर्मान्तराक्षिप्तभोगदानासामर्थ्यं विश्रमतश्च तद्दानसामर्थ्यं कर्मविपाकहेतुत्वेनानुमीयते, अन्यथा कालान्तरेऽपि मषकादीनां पक्षिणामिव भावः केन न स्यात्। ननु कालविशेष एव तेषां हेतुः। किमतः सोऽपि कर्मविपाकाविर्भावनयैव। तद्वत् प्रकृत्यन्तराणां महत्त्वेऽपि अनवरतानन्तपुरुषभोगसाधनत्वेनापचिततरशक्तित्वात् कर्मानुरूपभोगदानासामर्थ्यतः कर्मविपाककरणत्वाभावो विश्रमतश्च तत्परिपाकसामर्थ्यमनुमीयते इति महाप्रलयसिद्धिः। यदुक्तम्

'नच कर्मवतां युक्ता स्थितिस्तद्भोगवर्जिता।'
[श्लो० वा० सं० प० ६१]

'सर्वेषां तु फलोपेतं न स्थानमुपपद्यते।'
[श्लो० वा० सं०प० ७०]

'कर्मणां वाप्यभिव्यक्तौ किं निमित्तं तदा भवेत्।'
[श्लो० वा० सं० प० ७१]

इति तत् प्रतिक्षिप्तमेवेति ॥ ४६ ॥

अत्र पराभिप्रायः

अशेषकर्मनाशे च
पुनः सृष्टिः कुतः स्थितिः ।

एवमपि महाप्रलयः कर्मविनाश एव पर्यवस्यतीति पुनः संसाराभावप्रसङ्गः । तदुक्तम्

'अशेषकर्मनाशे वा पुनः सृष्टिर्न युज्यते ।'

[श्लो० वा० सं० पृ० ७१]

इति ॥

एतत् परिहरति

देहान्तरफलं कर्म
क्षीयते नैव मृत्युना ॥ ५० ॥

'नाभुक्तं कर्म नश्यति' इति नियमान्न महाप्रलयो देहान्तरोपभोग्यानां कर्मणां क्षयहेतुः, अपितु उक्तनयेन तत्परिपाकप्रयुक्तत्वात् तत्परिपाकहेतुरेवेति नैष प्रसङ्ग इति ॥ ५० ॥

इतश्च प्रलयसिद्धिरित्याह

क्ष्मादेः साकारता प्रोक्ता
जन्मनस्तस्य पूर्वतः ।
गम्यते जगतः स्वाप-
स्तस्मात्प्राक्च जगत्क्षयः ॥ ५१ ॥

यत्साकारं कार्यं तदतदाकारादुपादानकारणादुद्भवस्व-भावम् यथा वटादिः वटबीजादेः । साकारं च जगत् पृथिव्यादिकार्यमतस्तस्य यत् जन्मतः पूर्वं तदविभागाकारात्मना भाव्यमित्यपि प्रलयसिद्धिः ॥ ५१ ॥

अपिच

भविष्यत्प्रलयश्चापि
कार्यत्वादेव गम्यते ।
कृत्स्ननाशोऽपि कार्यस्य
देहादेः संप्रदृश्यते ॥ ५२ ॥

कृतकत्वात् भुवनादेः शरीरादिवत् सर्वात्मना नाशेन भवितव्यमिति भविष्यतोऽपि महाप्रलयस्य सिद्धेः शास्त्रोज्झितस्यापि कालस्य संभवादवश्यं तत्कर्त्रा भवितव्यमितीश्वरासिद्धिः । कथं तर्हि अधिकारिसंवलना । अत एव बीजाङ्कुरप्रवाहवत् तत्पूर्विकैवेत्यदोषः ॥ ५२ ॥

शास्त्रस्येश्वरकर्तृत्वनिषेधाय परोक्तं हेत्वन्तरमाह

धर्मतः पत्युरैश्वर्यं
धर्मधीः शास्त्रतस्ततः ।
शास्त्रं पूर्वत्र सिद्धं चेत्

यद्यदैश्वर्यं तत्तत् शास्त्रार्थानुष्ठानात्मकात् धर्मादेव यथा योगिनाम् । ऐश्वर्यं च जगत्कर्तुरभ्युपगतं भवद्भिरि-

ति, तदपि धर्मादेवेति धर्मावगमहेतोः शास्त्रस्यापि पूर्वसिद्धेर्नेश्वरकर्तृकता ॥

अत्रोत्तरं कारिकाभागेनाह

**कल्पेऽतीते तदिष्यते ॥ ५३ ॥**

यद्यत्र शास्त्रस्य पूर्वत्वमात्रमेव साध्यते तत् सिद्धसाधनमेव प्रतिकल्पं सर्गवत् शास्त्रस्यापि सत्त्वात् । अथेश्वरात् पूर्वत्वं साध्यते ततोऽसिद्धो हेतुरित्याह

**किंत्वैश्वर्यं महेशस्य**
**धर्मान्नेत्यभिधास्यते ।**

यदि हि धर्मसाध्यत्वं तदैश्वर्यस्य सिद्धं स्यात्, स्यादेव शास्त्रस्येश्वरात् पूर्वमपि सिद्धिः । नतु तद्धर्मसाध्यम् अपितु अनादीत्यग्रे वक्ष्यति ॥

अभ्युपगम्यापि प्रवाहनित्येश्वरवाद्यभिप्रायेणाह

**अस्तु वा धर्मतस्तस्मा-**
**दनित्यं नित्यतां व्रजेत् ॥ ५४ ॥**
**अतोऽन्यदेव तच्छास्त्रं**
**जाता तद्धर्मधीर्यतः ।**
**जगद्धिताय तेनान्य-**
**दिदानीं रचितं मतम् ॥ ५५ ॥**

प्रवाहनित्येश्वरवादिनां हि ईश्वरः सर्गवत् शास्त्रं निर्माय तावदेव जगत्कृत्यं विधत्ते यावत् तद्विहितशास्त्राद्थानुष्ठानेन ईश्वरो हि अन्यः सिद्धः । तस्मिंस्तु आगते नियोगिवत् स्वव्यापारं सर्वं शास्त्रं चोपसंहृत्य स्वात्माराम एव भवति । ततः सिद्धेश्वरोऽसदास्थयैवानेन जगत्कृत्यमुपसंहृतामित्यवगत्य निशाकालं प्रतीक्ष्य सर्गवत् शास्त्रं निर्माय जगत्कृत्यं तावत् रचयति यावत्पुनस्तद्विहितशास्त्रादनुष्ठानक्रमेणेश्वरोऽन्यः सिद्ध इत्येवमन्योऽन्यश्चेति सर्गसंहारवत् शास्त्रमनित्यमपि प्रवाहतो नित्यत्वादीश्वरकर्तृकमेव ॥ ५५ ॥

पुनरीश्वरकर्तृकत्वं शास्त्रस्यामृष्यमाणः परः

**शास्त्रादर्थेषु विज्ञान-**
**मतो नो कृतकं हि तत् ।**
**कृतकाद्वचसो यस्मा-**
**द्विवक्षा संप्रतीयते ॥ ५६ ॥**

यदाह शावरभाष्यकारः

" लौकिकाद्धि वाक्यादेवमयं पुरुषो वेद इति भवति प्रत्ययो वैदिकात्त्वेवमर्थ इति " [ १ । १ । २ ]

अतो विवक्षातिरस्कारेण यतः शास्त्रादर्थ एव प्रत्ययः ततो लौकिकवन्नो कृतमिति । नो निषेधे ॥ ५६ ॥

एतदपि प्रतिक्षिपति

नैतस्मादकृतत्वं स्या-
त्प्रत्यक्षादेरसंभवात् ।

अकृतत्वं हि शब्दस्योक्तनयेन प्रत्यक्षनिराकृतमतो नानुमानेन साधयितुं शक्यम् ॥

यदपि उक्तं 'लौकिकाद्वचसो विवक्षा प्रतीयते' इति तदप्यसिद्धमित्याह

वाक्याच्च सर्वतः पूर्व-
मर्थे धीरविशेषतः ॥ ५७ ॥

वैदिकादिव लौकिकादपि वाक्यादुच्चारितमात्रादेव विदितपदपदार्थसम्बन्धस्य प्रथममर्थ एव प्रतिपत्तिः भवति तत्रैव औत्पत्तिकेन सामयिकेन वा सम्बन्धेन तस्याभिधाशक्तिसिद्धेः, नहि अभिधायकत्वे तयोर्विशेषः। यदुक्तं भवद्भिरपि

'य एव लौकिकाः शब्दास्त एव वैदिकास्त एव च तेषामर्थाः'
( १ । १ । ३० शा० भा०

इति। पश्चात्तु मुख्यार्थासंभवेन गौणो लाक्षणिको वेति, तदिदमुक्तं भवद्भिरपि

'पौर्वापर्यपरामृष्टः शब्दोऽन्यां कुरुते मतिम् ।'
[ श्लो० वा० सं० प० ६३ ]

इति ॥ ५७ ॥

यस्य तु गौणलाक्षणिकयोरपि व्यभिचारः स इदानीं वक्तुर्विशिष्टं ज्ञानं गमयतीत्याह

**व्यभिचारो न यस्य स्या-**
**दन्यार्थं तत्कथं कृतम् ।**

कृतं लौकिकवाक्यम् 'अङ्गुल्यग्रे हस्तिशतयूथमास्ते' इत्यादिवाक्यवत् यदेव सर्वात्मना स्वार्थे प्रत्यक्षादिभिर्बाध्यते तदेव ततोऽन्यमर्थं वक्तुर्वञ्चनाभिप्रायं भ्रान्तिज्ञानयोगं वा गमयति, यदुक्तं भवद्भिरपि

"प्रमाणान्तरमत्र बाध्यते न पुनर्हस्तिशतयूथम्"

इति, यद्युन्मत्तादिना अभ्यासकामेन अन्यार्थप्रतिपादनाभिप्रायेण वा न प्रयुक्तं भवेत्। तैः प्रयुक्ते तु न तमपि अपितु विवक्षामात्रकमेवेत्युक्तम्। यस्य तु प्रत्यक्षादिभिर्व्यभिचारो नास्ति तद्वाक्यं न वक्तुरभिप्रायं नापि विवक्षामात्रम् अपितु अर्थमेव प्रतिपादयतीति ॥

अत्र कारिकाभागेन परः

**जातत्वात्संशयस्तन्त्रे[1]**

यद्येवमुत्पन्नत्वेनार्थप्रतिपादकत्वेन चाविशेषात् लौ-

---

1 ख० स्तत्रेति पाठः।

किकवाक्य इव शास्त्रेऽपि अर्थविषयः संशयः स्यात् नच भवति तस्मादनुत्पन्नमेव तदिति ॥

भागान्तरेणैतत् प्रतिक्षिपति

अजातं तर्हि किं भवेत् ॥ ५८ ॥

यदि रचनात्मकमपि तन्त्रं नानित्यम् घटाद्यपि तथैव स्यात् ततश्च सर्वस्य नित्यताप्रसङ्ग इत्युक्तम् । कथं तर्हि न ततः संशयः । संशयहेतोः प्रतारकत्वस्याभावात् तदभावश्चाप्तप्रयुक्तत्वात् पित्रादिवाक्येष्विवेति वक्ष्यामः ॥ ५८ ॥

ये त्वाहुर्नेह व्याकरणे वस्त्वर्थोऽर्थः शब्दस्य अपितु विवक्षित इति तान् प्रत्याह

पदार्थान्वयहीनश्च
वाक्यार्थः स्यादलौकिकः ।
न पदं विद्यते यस्मा-
द्विवक्षाप्रतिपादकम् ॥ ५९ ॥

नहि विवक्षा वाक्यस्यार्थः पदार्थस्य वाक्यार्थानुपपत्तेः, पदान्येव संबद्धानि वाक्यं यतः, न च पदस्यार्थो विवक्षा अपितु बाह्य एवेति वाक्यस्यापि स एव युक्त इति नातो वेदस्याकृतकत्वसिद्धिः ॥ ५९ ॥

पुनरीश्वरकर्तृकतानिषेधे वेदस्य परो हेत्वन्तरमाह

परोक्षो ननु शास्त्रार्थो
विशेषत्वादलौङ्गिकः।
लिङ्गिसामान्यगमकं
तद्व्याप्तं लिङ्गमिष्यते ॥ ६० ॥

अविदित्वा च तत्कश्चि-
त्कथं शास्त्रं करिष्यति।

'चोदनालक्षणोऽर्थो धर्मः' (पू० मी० सू० १।१।२)

स च कार्यात्मको न सिद्धस्वभाव इति न प्रत्यक्षनिमित्तः। यदाह सूत्रकारो जैमिनिः

'सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत् प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वात्' [पू० मी० सू० १। १। ४]

इति। 'प्रत्यक्षपूर्वकत्वाच्चानुमानादिवत् संप्रति निमित्तत्वम्' इति भाष्यकारश्च, विशेषितत्वाच्चाननुमेयः धर्मो हि ज्योतिष्टोमादिरेक एव सकलाध्यायिभिस्त्रयीतो होत्रुद्गात्रध्वर्युकर्मभेदेन प्रतीयते नहि प्रत्यध्यायिनमनुष्ठातारं वा त्रय्यां तदर्थस्य वा ज्योतिष्टोमादेर्भेदः शाखाभेदेऽपि तत्स्वरूपाभेदात्। यदुक्तम्

'सर्वशाखाप्रत्ययमेकं कर्म'

इत्येकत्वेन विशेषितत्वान्न साध्यधर्मसामान्येन सपक्षे सिद्धव्याप्तिः अत एव साध्यधर्मसामान्यानुमातुः लिङ्गस्याविषय इतीश्वराभ्युपगमेऽपि तस्य चोदनाव्यतिरेकेण धर्मावेदकप्रमाणासंबन्धादविदितस्य चोपदेष्टुमशक्यत्वान्न चोदनाकर्तृत्वसिद्धिः ॥

एतत् पराकरोति

**प्रामाण्ये तस्य संसिद्धे**
**वक्तुं युक्तमिदं बुधाः ॥ ६१ ॥**
**सिद्धमेव यतः कुर्या-**
**द्धात्वविषये मतिम् ।**

हेयोपादेयतदुपायपरिच्छेदकत्वं हि प्रमाणत्वम् । यदाहुः

‘हेयोपादेयतत्त्वस्य साभ्युपायस्य वेदकः ।
यः प्रमाणसमाविष्टः ।’

इति । तस्मिन्नीश्वरप्रामाण्ये सिद्धे नैतत् वक्तुं युक्तमिति काका दर्शयति । तच्च प्रामाण्यं तस्य व[illegible]सर्वज्ञत्वसिद्ध्यैव सिद्धमिति चोदनावत् तज्ज्ञानमपि [illegible]तीतं भूतं भविष्यत् सूक्ष्मं व्यवहितं विप्रकृष्टमेवंजातीयकं सर्वमर्थमवगमयितुं समर्थमिति कथं न धर्मविषयमपि स्यात् । ननु कार्यत्वात् धर्मस्य तद्विषयत्वं न संभवतीत्युक्तम् । न फलादिनानैकान्तिकत्वात् फलकर्मव्यतिरेकेण च

कार्यान्तरस्यासिद्धेः । ननु नियोगात्मकमेव तत् । किमतस्तस्यापि प्रेषणाध्येषणादिरूपत्वेन स्वाम्याद्याशयविशेषात्मकत्वतः प्रमाणान्तरगोचरत्वात् । ततोऽन्य एवासौ अपौरुषेयविषयः प्रमाणान्तरागोचर इति चेत् । न, तथाभूते संबन्धग्रहणाभावेन शब्दादप्रतीतेर्नहि अलौकिकः शब्दार्थः संभवति इत्युक्तम् । न प्रेषणाद्युपाधिद्वारेण अस्त्येवात्र व्युत्पत्तिरिति चेत् । न, तर्ह्यलौकिकोऽसौ उपाधिद्वारेण तेषां प्रमाणान्तरविषयत्वादिति, अत एव नियोगस्य नियोक्तृव्यापारात्मकत्वात् लौकिकवाक्यवत् वेदेऽपि नियोक्त्रा भवितव्यमितीश्वरकर्तृकत्वसिद्धिः ।

एतदेवाह

**न च बाधास्ति येनास्य**
**तत्प्रमाण्यनिवारणम् ॥ ६२ ॥**

न च बाधकप्रमाणमस्ति येनेश्वरस्य तस्मिन् धर्मे प्रामाण्यनिवारणमवेदकत्वं सिध्येत् ।

ननु साधकमपि प्रमाणं नास्तीत्याह

**इत्थंरूपं ततस्तर्हि**
**साधुकारणजं हि तत् ।**

तत एव तर्हि बाधकप्रमाणाभावात् सर्वज्ञस्येत्थंरूपं धर्मावेदकमपि तत् ज्ञानं सिध्यति तस्माच्च साधुकारणजं तदिति ॥

तदेव साधुकारणजत्वं तज्ज्ञानस्याह

त्रिकालार्थाविसंवादि
ज्ञानं चेशेऽभिधास्यते ॥ ६३ ॥

नहि त्रिकालामलवेदिनः कारणदोषो ज्ञानानुत्पादे संभवति। तर्हि कालत्रयानवच्छेदप्रतीतेर्नियोगस्य तज्ज्ञेयत्वासिद्धिः। सत्यम्, यदि प्रतीयते, स तु 'अग्निहोत्रं जुहुयात् स्वर्गकामः' इत्यादिभिः वाक्यैः भूतवर्तमानतातिरस्कारेण भविष्यत्सामान्य एव प्रतीयते। यदाह शावरभाष्यकारः 'भविष्यश्चैषोऽर्थो न ज्ञानकालेऽस्ति' इत्यविरोधः ॥ ६३ ॥

अत एवेदमपि सिध्यतीत्याह

नचाप्यसर्ववित्कश्चि-
न्नल्पायुश्च करोति तत्

तिशयसिद्धेः सर्वज्ञत्वानादित्वादिसिद्धिः ॥ ६४ ॥

ननु बहवः कथञ्चिदंशांशिकया तथाभूतमपि वेदं करिष्यन्तीत्याह

बहूना करणे न स्या-
त्प्रोक्तलक्षणसंगतिः ।

तदानीं हि प्रोक्तानां मन्त्रब्राह्मणानां सर्वासां च शाखानामङ्गप्रत्यङ्गादिलक्षणानां चान्वयो न भवेत् भिन्नकर्तृकत्वात् बौद्धार्हतशास्त्राणामिव ॥

अथ बहुभ्यः समुपजीव्य एक एव तत्र कर्ता भविष्यत्युच्यते। तत्राप्याह

एकस्य शक्तिक्लृप्तौ स्या-
त्पक्षपातः केवलो हरे ॥ ६५ ॥

महतो बहुप्रकारस्य वेदे कर्तृसमूहस्य भूतपूर्वस्य सिद्धौ यल्लिङ्गं तदीश्वरतिर्मितत्वे हि एकस्मिन् चरितार्थमिति न बहूनां कल्पनं युज्यते । यदाहुः

'कल्पितः कल्पनं हन्ति तत एवार्थसिद्धितः ।'

इति ॥ ६६ ॥

इतश्च साधुकारणजं तज्ज्ञानमित्याह

न च प्रतारकः शर्वो
यस्मात्सर्वजगत्पतिः ।
प्रतार्य प्राणिनस्तेभ्यः
किमपूर्वमवाप्स्यति ॥ ६७ ॥

प्रतारका हि रथ्यापुरुषाः केन केनचित् स्वप्रयोजनेन प्रतारयन्ति । तस्य तु परार्थवृत्तेः स्वप्रयोजनाभावात् कुतः प्रतारकता ॥ ६७ ॥

किंच

परार्थं मन्त्रवादाश्च
येन सर्वविदा कृताः ।
सर्वश्रेयोयुताः सर्वे
स कथं हि प्रतारयेत् ॥ ६८ ॥

परोपकारायैव येन मन्त्रवादा रसरसायनपातालगुटिकाः सर्वस्य काम्यमानस्य श्रेयसः साधका बहवो विरचितास्तस्य प्रतारकत्वं न संभवत्येव ॥ ६८ ॥

न चापि पुरुषाणामत्र कर्तृत्वमित्याह

परोक्षो मन्त्रवादार्थो
विशेषत्वादलैङ्गिकः ।
सेतिकर्तव्यताकोऽपि
ज्योतिष्टोमादिवन्नृणाम् ॥ ६९ ॥

पुरुषाणां हि प्रत्यक्षसिद्धे हरीतक्यादेर्विरेकादाविवानुमानसिद्धे वा चक्षुरादेः पटलादिनिवृत्त्यादाविव शास्तृत्वं स्यात् नतु इन्द्रियातीते प्रोक्तनयेन विशेषत्वाच्चाननुमेये ज्योतिष्टोमादेः स्वर्गादाविव । मन्त्रवादशास्त्रस्य चार्थोऽङ्गव्रातेनेतिकर्तव्यतया ध्यानधारणादिकया युक्तः फलसाधनत्वेन न प्रत्यक्षसिद्धो विशेषत्वाच्चाननुमेय इति न शास्तृत्वं पुरुषाणां संभवति,—इतीश्वरस्य युक्तम् ॥ ६९ ॥

न च वेदाङ्गानामिव वेदकर्तृसिद्ध्यैव कर्तृसिद्धिर्मन्त्रवादानामित्याह

प्रसिद्ध्यसंभवाच्चापि
न वेदे गरुडादयः ।

कर्तारः सर्वविद्यैषां
गम्यतेऽनुग्रहैकधीः ॥ ७० ॥

प्रसिद्ध्या हि अनादिप्ररूढया त्रय्यामेव वेदता शाखाविशेषाणां च वेदविशेषशाखात्वं न प्रमाणान्तरेण। न च वेदविषया मन्त्रवादानां प्रसिद्धिरिति भिन्नशास्त्रत्वेन पृथक् तेषां कर्तृविशेषसिद्धौ प्रयत्नः कृतः ॥ ७० ॥

अत्र परोऽसाधुकरणजमीश्वरस्य ज्ञानं साधयितुमाह

सर्वज्ञानक्रियाहीनो
वक्तृत्वात्तर्हि शङ्करः ।

वक्तृत्वादस्मदादिवत् ईश्वरः सर्वज्ञानादिरहितः ॥

तदयुक्तमसिद्धत्वादित्याह

वक्तृत्वं शास्त्रकर्तृत्वं
नैतस्मात्प्रोक्तदूषणम् ॥ ७१ ॥

नास्मदादिवत् वचनमात्रकर्तृत्वं वक्तृत्वमत्र सिद्धम् अपितु अन्यदेव तत् शास्त्रकर्तृत्वम् न च तस्यासर्वज्ञत्वेन व्याप्तिः सिद्धा ॥ ७१ ॥

विरुद्धश्चायं हेतुरित्याह

अस्माच्च प्रत्युतेशानः
सर्वज्ञः संप्रतीयते ।

शास्त्रं हि कुर्वतानेन
सर्वमेव कृतं भवेत् ॥ ७२ ॥
फलजातं यतः पुंसां
सर्वं शास्त्रात्प्रसिद्ध्यति ।

तदिदमुक्तम्

'न चाप्यसर्ववित्कश्चिदल्पायुश्च करोति तत् ।'

इति ॥ ७२ ॥

अत एवाह

चोद्यं चेद्दक्कथं कुर्या-
त्प्रागुक्ताखिलमानवित् ॥ ७३ ॥

अज्ञस्यैवैतत् चोद्यं नतु पूर्वोक्तप्रमाणसंस्कृतस्येति, तदेवं साधुकरणजनितत्वादीश्वरज्ञानं धर्मादिविषयमपि संभवतीति शास्त्रस्य प्रमाणान्तरागोचरार्थत्वात् न ईश्वरकर्तृकत्वासिद्धिः ॥ ७३ ॥

अत्र स्वयूथ्यः

स्वमतस्यैव मानत्वे
यत्नं सर्वं करोति हि ।
वेदस्यापि प्रमाणत्वे
किं मुधैव कृतः श्रमः ॥ ७४ ॥

सर्वेण हि प्रेक्षावता स्वदर्शनस्यैवाप्रामाण्यशङ्काप्रतिक्षेपाय यत्नो विधेयः नच दर्शनान्तरस्य निष्प्रयोजनत्वात् अविशेषतः सर्वागमप्रामाण्यसमर्थनेनानवस्थाप्रसङ्गाच्चेतीश्वरकर्तृत्वेन वेदप्रामाण्यसमर्थनमेतत् भवतोऽनुपपन्नमेव ॥ ७४ ॥

तदयुक्तम्, तस्यैवेहापेक्षणीयत्वान्नागमान्तराणामित्याह

वेदं विना न कर्मास्ति
कलादि च न तद्विना ।
छेत्तव्यं दीक्षया सर्वं
कर्मादीति प्रभाषितम् ॥ ७५ ॥

अनुज्ञाताश्च वेदोक्ताः
शैवे वर्णाश्रमादयः ।
वेदस्यापि प्रमाणत्वे
यत्नोऽस्माभिरतः कृतः ॥ ७६ ॥

यतोऽनेकजन्मसंभृतं धर्माधर्मात्मकं कर्म सर्वस्य कलादिक्षित्यन्तस्य तत्त्वभावभूतभुवनात्मनः संसारस्य हेतुभूतं दीक्षया च्छेद्यमिहोक्तम् । न चाज्ञातस्य च्छेद्यत्वमुपपद्यते नच वेदं विना तस्याविकलस्य ज्ञानं सं-

भवति बौद्धोक्तस्य चैत्यशयनादेरपि आर्हतोक्तस्य केशलुञ्चनादेर्धर्मस्य कथञ्चित् तदेकदेशत्वात्, यदुक्तम्

'सर्वः क्लेशो हि पापस्य क्षपणे पर्यवस्यति'

इति। म्लेच्छकल्पितस्य तु परप्राणहरणादेर्धर्मस्यापि अधर्मतया तेन व्याप्तत्वात्। यतश्चेह वेदोक्ता वर्णाश्रमस्थितिः पाल्यत्वेन श्रूयते

'इति वर्णाश्रमाचारान्मनसापि न लङ्घयेत्।
यो यस्मिन्नाश्रमे तिष्ठेद्दीक्षितः शिवशासने॥
स तस्मिन्नेव सन्तिष्ठेच्छिवधर्मं च पालयेत्।'

इति सर्वकर्मविच्छेदोपदेशान्यथानुपपत्त्या तत्तद्वर्णाश्रमव्यवस्थापनश्रुतेश्च वेदस्यास्माभिः प्रामाण्ये यत्नो विहितः नागमान्तराणामिति॥ ७६॥

ननु तस्य प्रमाणत्वेन सिद्धेस्तथाप्ययं यत्नो निष्फल इत्याह

वेदो मुमुक्षुभिश्चान्यैः
प्रत्याख्यातो यतो भवेत्।

यतो बौद्धार्हतादिभिर्वेदस्य प्रामाण्यं प्रत्याख्यातमेव ततोऽयं यत्नः सफल एव॥

नच तत् प्रत्याख्यातुं शक्यमित्याह

वेदं विना न जन्तूनां
कुतो मोक्षो भवं विना॥ ७७॥

नहि हेयं संसारं तत्साधनं चापरिज्ञाय मोक्ष उपपद्यते । नच वेदं विना तस्य सार्वरूप्येण ज्ञानं संभवतीत्युक्तम् । अतो मोक्षोपदेशान्यथानुपपत्त्या तैरपि वेदः प्रमाणत्वेनाभ्युपगन्तव्य एवेति ॥ ७७ ॥

यद्येवं, शान्ति कुर्वतो वेतालोत्थापनमेतदिति परः

वेदे मोक्षस्य सिद्धत्वा-
त्किं शैवेन प्रयोजनम् ।

एवं हि वर्णाश्रमव्यवस्थादेरिव मोक्षस्यापि वेदादेवावगतेरनुवादकत्वेनाप्रामाण्यमेव शास्त्रस्येति ॥

अथ परस्परानपेक्षयैकार्थप्रतिपादकत्वेऽपि शास्त्रद्वयस्येव विकल्पतः प्रामाण्यमनयोर्भविष्यतीत्याह

तत्स्थस्येहाधिकारित्वा-
द्विकल्पोऽत्र न युज्यते ॥ ७८ ॥

युक्तं शास्त्रद्वयस्य विकल्पतः प्रामाण्यं समशिष्टत्वात् । इह तूत्पत्तिशिष्टवेदसंविद्व्यवस्थितस्य ब्राह्मणादेरधिकारात् वेदत एवावगतिः प्रथममवश्यंभाविनी तस्य,—इति विषमशिष्टत्वात् विकल्पानुपपत्तेरप्रामाण्यमेव ॥ ७८ ॥

अथ 'ज्योतिष्टोमेन स्वर्गकामो यजेत' 'दार्शपौर्णमासाभ्यां स्वर्गकामो यजेत' इति वाक्ययोरेकस्वर्ग-

फलत्वेऽपि प्रयोगभूयस्त्वात् फलभूयस्त्वेनैवात्रैतयोरागमयोरेकफलत्वेऽपि प्रयोगभूयस्त्वात् फलभूयस्त्वेन प्रामाण्यं भविष्यतीत्याह

मतद्वयोक्तकरणं
फलभूयस्त्वतो न तत् ।

नैतत् युक्तं स्वर्गादेः फलस्येव मोक्षस्यातिशयासंभवात् ॥

इतश्चास्याप्रामाण्यमित्याह

निर्युक्तिकश्च गदितः
क्रियया कर्मसंक्षयः ॥ ७९ ॥

ज्ञानादेवाज्ञाननिवृत्तिद्वारेण मोक्षस्य सिद्धेर्दीक्षात्मनः कर्मणो मोक्षहेतुत्वप्रतिपादकमेतत् शास्त्रम् 'अग्निना सिञ्चेत्' इति श्रुतिवदप्रमाणमेव । तदुक्तम्

'ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते ।' (भ० गी० ४ । ३७)

इति । मीमांसकस्य चात्र पूर्वपक्षवादित्वात् कर्मसंक्षय एव मोक्ष इत्युक्तम् ॥ ७९ ॥

इयत् परवचनं प्रतिक्षेप्तुमाह

सर्वमुक्त्युत्तमा गीता
शिवता शिवशासने ।

फलेभ्यश्चापि सर्वेभ्यो
विज्ञेया साधिकाधिका ॥ ८० ॥

भवेदेष दोषो, यदि पुरुषतत्त्वावधिरेवात्रापि मोक्षो भवेत् अत्र तु शिवतत्त्वावाप्तिः दर्शनान्तरानधिगतोऽपूर्व एव सर्वज्ञत्वसर्वकर्तृत्वात्मकः श्रूयते इति बौद्धवैशेषिकार्हतसांख्यपांचरात्रवेदान्ताद्युक्तेभ्यः क्रमेण सातिशयेभ्यो मोक्षेभ्योऽतिशयेन सातिशयो ज्ञेय इति कुतः पूर्वोक्तो दोषः । यच्छ्रूयते

'बुद्धितत्त्वे स्थिता बौद्धा गुणेषु त्वार्हताः स्थिताः ।
गुणमूर्ध्नि स्थिताः सांख्या अव्यक्ते पांचरात्रिकाः ॥
स्थिता वेदविदः पुंसि ।'

इत्यादि ॥ ८० ॥

एतदेवाह

अनुष्ठानातिरेकाच्च
फलाधिक्यं विपश्चितः ।
अनुक्तमपि कल्प्यं त-
न्नाप्रामाण्यमसंभवात् ॥ ८१ ॥

अनुष्ठानहेतुत्वादनुष्ठानं ज्ञानमुच्यते तस्यास्य सर्वान्यागमप्राप्यस्थानान्तरप्रदर्शनेन प्रोक्तक्रमतः प्रवृत्तेः

सर्वागमेभ्यः सर्वविपर्ययत्वेनातिशयसिद्धितो हे पण्डिताः सर्वोत्कृष्टमनुक्तमपि मोक्षात्मकं फलं कल्पनीयं किमुक्तं न संभाव्यते इति नात्राप्रामाण्यदोषः पूर्वोक्तः ॥ ८१ ॥

नापि द्वितीय इत्याह

दीक्षयैवाप्यते सर्वं
नैष्ठिकेऽप्युदितं क्वचित् ।
वेदाद्युक्तमतस्तत्र
नैष्फल्याद्विनिवर्तते ॥ ८२ ॥

युष्मदागमेऽपि वेदादिविहितस्य कर्मणः क्रियया क्षय उपनिषत्सु श्रूयते

'यदोत्तमाधिकारेऽस्मिन्दीक्षितो वेदविद्भवेत् ।
क्षीयतेऽस्य तदा कर्म सर्वं सुकृतदुष्कृतम् ॥'

इति ॥ ८२ ॥

न केवलं ज्ञानकाण्ड एव यावत् कर्मकाण्डेऽप्येतद्विहितामित्याह

शुभया क्रियया वेदे
क्षयः पापस्य चोदितः ।

चान्द्रायणादिना प्रायश्चित्तकर्मणा दुष्कृतक्षयश्रुतेर्न

निर्युक्तिकः क्रियया कर्मसंक्षयो भवतामिवागमसिद्धत्वादित्यदोषः ॥

ननु युक्तिरत्रानुमानमभिमता चान्द्रायणादीनां दिव्येन प्रत्ययेन घटादिना शुद्धिहेतुत्वनिश्चयात् । यदुक्तम्

'अधर्मात्तमसो देहे गुरुत्वं यत्क्षयोऽस्य तु ।
धर्मतो लघुतोत्पादाद्धटतः संप्रतीयते ॥'

इति । अत्राप्याह

दृष्टश्च तत्क्षयः शैवे
क्रिययैव तुलादिना ॥ ८३ ॥

इहापि घटदीक्षायामेवंविधा युक्तिरस्त्येवेति न निर्युक्तिकः क्रियया कर्मसंक्षयो गदित इति ॥ ८३ ॥

अपिच

दीक्षातो यदि नेष्येत
कर्माभावः कुतोऽन्यतः ।

कर्मत्वादिभिर्हि कार्येऽर्थे वेदस्य प्रामाण्याभ्युपगमात् ज्ञानादिप्रतिपादकस्योपनिषद्भागस्य सिद्धार्थत्वेनाप्रामाण्यप्रसंगतः स्तुत्यर्थत्वेनार्थवादतया कर्मकाण्डान्वयतः प्रामाण्यसमर्थनात् ज्ञानयोगात्मनोऽन्यस्यासिद्धेः क्रियाविशेषात् यदि कुतश्चित् कर्माभावो नेष्यते, तदा वेदस्य मोक्षशास्त्रत्वाभावप्रसंगतो बौद्धादीनामत्र प्रामाण्यप्रसंगः

इति मोक्षशास्त्रत्वान्यथानुपपत्त्यावश्यं कुतश्चित् क्रियाविशेषात् कर्माभावोऽभ्युपगन्तव्यः यतश्चाभ्युपगम्यते सैव दीक्षेति न निर्युक्तिकः क्रियया कर्मसंक्षयः ॥

अत्र परोऽन्यथा कर्माभावमाह

अकृतेरुत्तरेषां स्या-
त्पूर्वेषामुपभोगतः ॥ ८४ ॥

तदिदमुक्तं

❀

'नित्यनैमित्तिके कुर्यात्प्रत्यवायजिहासया ।
मोक्षार्थी न प्रवर्तेत तत्र काम्यनिषिद्धयोः ॥' (श्लो० वा० सं० प० ११०)

इति ॥ ८४ ॥

एतत् प्रतिक्षिपति

अनेकजन्मसंभोग्या-
न्येकस्मिन्नेव जन्मनि ।
कर्माणि कुरुते तस्मा-
द्भसाद्भणितं त्विदम् ॥ ८५ ॥

भवेदेतत् यदि प्रतिजन्म एकजन्मभोग्यान्येव पुरुषः कर्माणि कुर्यात् अनेकभवभोग्यानि तु ज्योतिष्टोमादीनि नानाफलानि ब्रह्महत्यादीनि कुर्वन् दृश्यते इति पूर्वेषामुपभोगतः क्षयोऽसिद्धः नहि नरकस्वर्गादिफलयोरे-

❀ पद्यमिदं मुद्रितश्लोकवार्तिके पूर्वार्धोत्तरार्धयोर्व्यत्यासेन दृश्यते ॥

कजन्मन्येवोपभोगः संभवतीति प्रमाणस्वरूपापर्यालोचनेनैतत् कथितं भवद्भिः ॥ ८५ ॥

ततश्च यदि नामेह
न कृतं कर्म जन्मनि ।
जन्मान्तरतयापि स्या-
त्पूर्वस्मादेव कर्मणः ॥ ८६ ॥

पूर्वेषामुपभोगतः सर्वेषां क्षयस्यासिद्धेरस्मिन् जन्मनि प्रत्यवायफलहेतोरकरणेऽपि पूर्वतरकर्मभ्यो जन्मान्तराणि सन्त्येवेति 'नित्यनैमित्तिके कुर्यात्' इत्याद्युक्तो मोक्षसाधनन्यायोऽनैकान्तिकत्वादयुक्त एव स्यात् ॥ ८६ ॥

एवमनेकभवभोग्यकर्मसंभवे यदेव तीव्रवेगं तदेव मन्दवेगान्यकर्मोपभोगोपमर्देन स्वकार्यमभिनिर्वर्तयत् एकस्यैव जन्मनो हेतुः संपद्यते इति कर्मान्तराणां तदुपमर्दादेवाभावाभावसिद्धेर्नानैकान्तिकतास्य हेतोरित्याह

अनेकभवभोग्यानि
कर्माणि कुरुते पुमान् ।
तत्राप्येकस्य संभोगा-
न्न नाशः सर्वकर्मणाम् ॥ ८७ ॥

तत्र तेषु अनेकभवभोग्येषु कर्मसु मध्यादेकस्य भोगा-

द्धेतोर्न सर्वेषां कर्मणां क्षयस्तद्वदेवाभुक्तत्वात् यत् श्रूयते

'नाभुक्तं कर्म नश्यति ।'

इति अपितु तुहिनपाताद्युपरुद्धबीजवत् कालान्तरेण फलदातृतया वासनात्मतया तावत् तिष्ठन्तीति अतीव्रवेगानां कर्मणां नाशासिद्धेस्तेभ्यो जन्मान्तराणि सन्त्येवेति नैकस्मिन् जन्मनि प्रत्यवायफलहेतोरकरणमात्रेण मोक्ष इति । अथ प्रतिजन्मविषयमेतदित्युच्यते, तदयुक्तं म्लेच्छादिजन्मविषयत्वेनानधिकारतोऽसंभवात् तन्नित्यानुष्ठानस्य च प्राणिवधादेर्निषेध्यत्वेन प्रत्युत जन्मान्तरहेतुत्वतो विरुद्धत्वात् ॥ ८७ ॥

ननु यावन्न सर्वकर्मक्षयो न तावन्मनुष्यजन्म, यदुक्तम्

'आद्यो हि देहः पुरुषार्थमूल-
स्ततोऽप्यन्ये कर्ममूलाः प्रपन्नाः ।'

इति मनुष्यजन्मान्यथानुपपत्त्यानेकभवभोग्यानां सर्वेषां कर्मणां क्षयसिद्धेर्भवत्येवास्मिञ्जन्मनि प्रत्यवायफलहेतोरकरणान्मोक्ष इति । अत्राप्याह

अन्त्ये जन्मनि नो सर्वं
कर्म संभुज्यते यतः ।
सुखदुःखादिभेदोऽयं
जन्मन्यत्रापि दृश्यते ॥ ८८ ॥

यद्येवं, मनुष्यजन्मनोऽकर्मफलत्वात् वैचित्र्याभावप्रसं-
गः । कर्मनिबन्धनं हि सुखादिवैचित्र्यं पुंसामित्युक्तम् ।

'इह ते कर्मणामेव विपाकश्चिन्तयिष्यति ।
अमुत्र भविता यत्ते तच्चिन्तय शुभाशुभम् ।'

इति । ततश्च

'आद्यो हि देहः पुरुषार्थमूलः ।'

इत्यस्य बाधितत्वात् 'अग्निना सिञ्चेत्' इतिवत् अप्रामाण्यतोऽपि उक्तमेतत् स्यात् ॥ ८८ ॥

एतज्जन्मप्रयाणमध्यकृतं सर्वमेव शुभाशुभं कर्म प्रधानोपसर्जनभावेन संमूर्छितं युगपदेकमेव जन्म करिष्यतीत्येवमनेकभवभोग्यानां कर्मणामसंभवकल्पनया न प्रोक्तदोषोऽत्र भविष्यतीत्याह

इन्द्रत्वादिफलं वेदे
उच्यते तत्पृथक् पृथक् ।
आजन्मजनितेभ्योऽपि
नैकं जन्म भवत्यतः ॥ ८९ ॥

'वाजपेयेन स्वाराज्यकामो यजेत' इति स्वाराज्यमिन्द्रत्वमेव तत्फलं कर्म आदिग्रहणात् स्वर्गादिफलं ज्योतिष्टोमादि ब्रह्महत्यादि च नरकफलं गृह्यते । तत् पृथक् पृथक्

जन्म करोतीत्यध्याहारः परस्परानपेक्षयैव श्रुतेर्विरुद्धफलत्वाच्च । ततो न सर्वेषां प्रधानोपसर्जनभावेन एकजन्मकरणकल्पनोपपद्यते श्रुतिविरोधादिति ॥ ८९ ॥

उपसंहर्तुमाह

**इष्टं च तदनेकेभ्यो**
**येषां तत्कर्म ते भवे ।**

अतोऽनेकभवहेतुकमनेकभवभोग्यं वा कर्मेष्टव्यं तत् येषामस्ति तेऽस्मिन् जन्मनि प्रत्यवायहेतोरकरणेऽपि संसारे वर्तन्त इति 'नित्यनैमित्तिके कुर्यात्' इत्यनेनापि प्रकारेण वेदस्य मोक्षशास्त्रत्वानुपपत्तेस्तान्निर्वाहायावश्यं क्रियाविशेषः कश्चित् कर्मक्षपणाय भवद्भिरभ्युपगन्तव्य इति सूक्तम्

'दीक्षातो यदि नेष्येत कर्माभावः कुतोऽन्यतः ।'

इति ॥

केचित्तु 'नाभुक्तं कर्म नश्यति' इति श्रुतेर्ज्ञानिनो योगबलात् सर्वकर्मभोग इत्येवं ज्ञानकर्मसमुच्चयात् मोक्षं प्रतिपन्ना न दीक्षयेति तन्मतमुपन्यस्य दूषयति

**ज्ञानी योगबलाद्भुङ्क्ते**
**सर्वं कर्मेति नार्थवत् ॥ ९० ॥**

कुत इत्याह

अज्ञानादेर्विना नो य-
दृष्टो भोगः सुखादिषु ।

वैराग्याद्विषयवैतृष्ण्यात्मकं ज्ञानं, रागानुबन्धाच्च भोगः कर्मत इति ज्ञानकर्मणोर्विरुद्धानुबन्धित्वात् सम्यङ्मिथ्याज्ञानयोरिव समुच्चयासंभवात् यत् अवश्यं 'नाभुक्तं कर्म नश्यति' इति श्रुतिबलात् ज्ञानिनोऽपि कर्म भोगेनैव क्षपणीयं तदन्यथानुपपत्तेर्दीक्षयैव क्षपणीयमिति 'निर्युक्तिकश्च गदितः क्रियया कर्मसंक्षयः' इति निरस्तम् । ननु तत्रापि भोगस्य संभवात् स एव तदवस्थो दोषः । न, चौर्यप्रयुक्तमन्त्रसामर्थ्योपहृतमोहादिनापि स्वप्नभोगवत्तदानीं ज्ञानिनोऽपि उपपत्तेरदोषः ॥

एवं कर्मक्षयान्मुक्तिमभ्युपगम्योक्तमिदानीं तु सैव नोपपद्यते इत्याह

क्षीणेऽपि कर्मजाते स्या-
न्मलादेर्नैव संक्षयः ॥ ६१ ॥
साधनं पाशविच्छित्त्यै
शिवोक्तं परिगृह्यताम् ।

अस्तु

'विज्ञानयोगसंन्याससैर्भोगाद्वा कर्मणः क्षयः ।'

इति । क्षीणेऽपि तस्मिन् मलस्य आदिग्रहणादीश्वरप्रेर्यत्वस्य च नैव क्षय इति विज्ञानकेवलित्वमेव तेषां न मोक्षः । यथा चाविद्यास्मृत्यादेः प्राकृताद्बन्धात् कर्मणश्च मलोऽन्योऽभ्युपगन्तव्यः तथोक्तमाचार्येण स्वायम्भुववृत्तौ 'यद्यशुद्धिर्न पुंसोऽस्ति' इत्यत्रान्तरे, व्याख्यातं च तट्टिप्पकेऽस्मत्पित्रा तत्रभवता भट्टनारायणकण्ठेनेति तत एवावधार्यम् । तस्य च द्रव्यत्वान्न ज्ञानान्निवृत्तिः अपितु चक्षुष्पटलादेरिव विशिष्टया क्रिययेति वक्ष्यामः । अतो

'निर्युक्तिकश्च गदितः क्रियया कर्मसंक्षयः ।'

इत्यस्यापि सदोषत्वान्न प्रमाणान्तरेण बाधितत्वादप्रामाण्यमस्य शास्त्रस्येति वक्तुं युक्तमिति ॥

अधुना न केवलमनुमानतः स्वागमाच्चेश्वरसिद्धिर्यावद्युष्मदागमादपीत्याह

नित्यादनित्यतो वापि
शास्त्रतश्चाधिगम्यते ॥ ९२ ॥

ईश्वरकर्तृकत्वेन वेदस्य प्रामाण्यं प्रतिपादितमस्तु यदि वा पराभ्युपगतेनाकृतकत्वेन सर्वथेश्वरासिद्धौ नाप्रामाण्यमित्यनवक्लृप्त्या दर्शयति । तथा च 'रौद्रं चरुं निर्वपेत्प्रजाकामः' 'सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकामः' इ-

त्यादौ रुद्रो देवतास्येति देवतातद्धितश्रुत्या रुद्रादि देवतात्वेन चोद्यते । ननु कार्येऽर्थे वेदस्य प्रामाण्यं, न सिद्धे देवतादौ । कथं तर्हि 'दध्ना जुहोति' 'पयसा जुहोति' इत्यादयो गुणविधयः, तत्र हि 'अग्निहोत्रं जुहुयात् स्वर्गकामः' इत्यतो भावार्थाप्राप्तत्वेनानुवादतो विधानासंभवात् दध्यादयोऽर्थाः सिद्धस्वभावा एव तत्साधनत्वेन विधेया इति तद्विषयं प्रामाण्यं केन निवार्यते । ननु 'वस्तुस्वाभाव्यादेव भावार्थविषयो विधिः' इति तस्यासिद्धेनार्थेन संबन्धासंभवादत्रापि दध्यादिसाध्यभावार्थविधिरेव न दध्यादिविधिस्ततो न सिद्धार्थविषयता । कुतस्तर्हि दध्यादीनां तत्साधनत्वावगतिः । कार्य इवात्रापि प्रमाणान्तरासंभवात् तदनुरक्तभावार्थविध्याक्षेपसामर्थ्यात् पश्वेकत्वादेरिवोपादानशेषत्वेन । तदेवमस्तु अलं प्रक्रियादौस्थ्येन । अत्रापि देवतोपरक्तभावार्थविधानसामर्थ्यात् दध्यादेरिवोपादानशेषत्वेन देवताया अपि तत्कारकभूतायाः सिद्धिरिति नेश्वरासिद्धिर्देवताविशेषरूपत्वात्तस्येति ॥ ९२ ॥

अत्र कारिकाभागेन परः

## देवता शब्दमात्रं चेत्

युक्तं दध्यादिपदानामत्र प्रमाणान्तरसिद्धार्थविषयत्वेनोपादानशेषभावयोग्यमर्थं प्रतिपादयतां तच्चोदनात्वम्,

देवतापदानां तु प्रमाणान्तरसिद्धार्थप्रतिपादकत्वेनासिद्धेर्न तथात्वमिति आनर्थक्यात् यदि परं सामसु स्तोभादीनामिव स्वरूपेणैव कार्यान्वयो नार्थद्वारेणेति चोदनात्वासिद्धेर्न देवतासिद्धिरिति ॥

भागान्तरेणैतत्प्रतिक्षेपः

**नार्थे विज्ञानतो भवेत् ।**

युक्तं स्तोभादीनामर्थप्रतिपादकत्वे प्रमाणाभावात् स्वरूपोच्चारणेनैव कार्यान्वयः। देवताश्रुतीनां तु 'रौद्रः पशुरुपाकर्तव्यः' 'त्र्यम्बकं यजामहे' 'ब्राह्मणो ब्राह्मणमालभेत' 'विष्णुरुपांशुर्यष्टव्यः' इत्यादिना विविधविभक्त्यर्थान्वयदर्शनात् दध्यादिश्रुतीनामिवार्थप्रतिपादकत्वसिद्धेरर्थ एव नियोजनात् तद्वारेणैवान्वयसिद्धेर्भवत्येव देवतालक्षणार्थचोदनात्वमिति ॥

ननूक्तं प्रमाणान्तरसिद्धार्थप्रतिपादकत्वाभावादेषामनर्थकत्वमित्यभ्युच्चययुक्तिमाह

**कारकत्वाच्च नो यस्मा-**
**दपार्था कारकश्रुतिः ॥ ६३ ॥**

यागसंप्रदानकारकत्वेन तावद्देवतालक्षणोऽर्थः श्रूयमाणो दध्यादिवत् उपादानशेषभावेन कार्यान्वयं भजत्येव ततो यदीदन्तया न प्रमाणान्तरसिद्धः ततः 'श्रुतिसि-

ह्यर्थमश्रुतोपलब्धौ यत्नवता भवितव्यं न श्रुतिशैथिल्यमाचरणीयम्' इति न्यायेनात्र कारकश्रुत्यन्यथानुपपत्त्या यूपाहवनीयादिशब्दवाच्यार्थवत् शास्त्रसिद्धोऽभ्युपगन्तव्य इति तत्प्रतिपादकतया देवताश्रुतीनामनर्थकत्वासिद्धेर्देवतार्थत्वमेवेति ॥ ९३ ॥

अपिच

ध्यानश्रुतेश्च सा भिन्ना
शब्दतो गम्यतेऽन्यथा।
प्रत्यक्षत्वेन शब्दस्य
व्यर्था स्याद्ध्यानचोदना ॥ ९४ ॥

'यस्यै देवतायै हविर्निरुप्तं स्यात्तां मनसा ध्यायेत्' इति श्रुतेः शब्दस्य प्रत्यक्षत्वेन ध्यानश्रुत्यानर्थक्यात शब्दतोऽन्यार्थरूपा देवतेति गम्यते ॥ ९४ ॥

किंच

स्तोत्रतश्चार्थरूपासौ
देवतेह यतः स्तुतिः।
अर्थं विशिष्टमुद्दिश्य
विशिष्टगुणकीर्तनम् ॥ ९५ ॥

'याज्यानुवाक्याभ्यामिष्टा देवतां स्तुवीत' इति श्रुतेः

गुणिनो 'गुणाभिधानं च स्तुतिः' इत्यभ्युपगमादर्थ एव देवता न तदभिधानात्मकः शब्द इति ॥ ९५ ॥

नापि विग्रहोऽस्या निराकर्तुं शक्यः श्रुतिसिद्धत्वादित्याह

रूपभेदवती सा च
चोद्यते यत्पृथक् पृथक् ।
तां वै ध्यायेच्छ्रुतेश्चेति
मनसा स्वे हि विग्रहे ॥ ९६ ॥

यत् यस्मात् 'रूपेणाकृत्या तेजसा प्रभावेण देवतान्तरेभ्यो भिन्नां देवतामभिध्यायेत्' इति श्रुत्यन्तरेण चोद्यते अतः पूर्वस्या अपि श्रुतेस्तां मनसा ध्यायेत् स्वशरीर एवेत्यर्थः,—इति संपद्यते देवतायाः शरीरसिद्धिः ॥ ९६ ॥

अतः कीदृशं कस्यास्तद्रूपमिति विशेषाकाङ्क्षायां

रूपं तस्याश्च विज्ञेय-
मर्थवादैः समर्पितम् ।

यथाहि अर्थाः 'शर्करा उपदधाति' इति श्रुतेः, के अर्था इति विशेषाकांक्षायां 'तेजो वै घृतम्' इत्यर्थवादात् द्रव्यविशेषप्रतिपत्तिः । एवमत्रापि रूपविशेषाकां-

च्चायां 'सहस्रशीर्षा पुरुषः' इत्यर्थवादतो रूपविशेषप्रतिपत्तिः ॥

अत एव

तद्रूपकथनेनैषां
स्तुत्यर्थत्वं न हीयते ॥ ६७ ॥

अर्थवादा हि एवमर्थं विशिष्टं स्तुवन्तोऽर्थवादा इत्युच्यन्ते अन्यथा निरर्थकत्वेन स्तोभादीनामिवार्थवादत्वायोगात् अतश्च विधिवाक्यैरपेक्षितत्वात् 'अर्थवादकृतश्चैषां जनानां मतिविभ्रमः' इत्यप्ययुक्तमुद्घोष्यते भवद्भिः ॥ ६७ ॥

येषामपि विधीनां नार्थवादतो विशेषस्तेषां

वेदप्रान्तेषु विज्ञेयं
मरणादिषु च स्फुटम्।
देवताना च सद्रूप-
मवैकल्याय कर्मणाम् ॥ ६८ ॥

एवं च वेदान्तेतिहासादीनां सिद्धार्थप्रतिपादकत्वेऽपि कर्मकाण्डापेक्षितदेवताविशेषाकारप्रतिपादकत्वेन तदेकवाक्यतया प्रामाण्यमित्यविरोधः। ततश्च यदुक्तम्

'उपाख्यानादिरूपेण वृत्तिर्वेदवदेव हि।
धर्मादौ भारतादीनाम् ॥' (श्लो० वा० सं० प० ६४)

इति तद्युक्तमेव तेभ्यो भ्रान्त्यसंभवात्

एवं च वेदान्तर्भा[1]वेनाऽपि अस्य शास्त्रस्य प्रामाण्यमित्याह

तेष्वेव परमेशस्य
रूपं विद्यात्परापरम्।
यच्चापि परमं रूपं
तच्छैवे तस्य कीर्तितम् ॥ ६६ ॥

यथा श्वेताश्वतरशाखादौ

'ईश्वरो द्विविधः प्रोक्तः परश्चापर एव च।
ताभ्यां परतरस्त्वन्यो यो निर्वक्तुं न पार्यते ॥'

इति। ततश्च तदपेक्षितपरतरेश्वरस्वरूपप्रतिपादकत्वेनास्य तदेकवाक्यतया प्रामाण्यं भवद्भिरप्यभ्युपगन्तव्यमेव ॥ ६६ ॥

ननु वेदान्तानामात्मविषयप्रतिपत्तिकर्तव्यतानिष्ठत्वेनावगतेरीश्वरविषयत्वासंभवात् कुतस्तदेकवाक्यतयास्य प्रामाण्यमित्याह

आत्मा द्रष्टव्य इत्यादि-
विधिश्चेश्वर एव हि।

१ ख० पु० वेदान्तान्तर्भावेन इति पाठः।

सर्वं शास्त्रस्वरूपं वै
श्रूयते यदनन्तरम् ॥ १०० ॥

तत्रापि 'आत्मा द्रष्टव्यो निदिध्यासितव्यः' इत्यादावात्मशब्देनेश्वर एव ज्ञातव्यतयोच्यते यतस्तदनन्तरं सर्वेश्वरः सर्वानुग्राहक इत्यात्मन्यसंभवादीश्वरविषयत्वेन सर्वमीश्वरशास्त्रप्रसिद्धं तस्य स्वरूपं श्रूयते ॥ १०० ॥

किंच

अधिकारिण्ययणौ शास्त्रं
प्रत्यक्षत्वादनर्थकम् ।

यदि तत्रात्मैव विवक्षितः स्यात् नेश्वरः ततस्तस्मिन् वेदान्तज्ञानाधिकारिणि आत्मनि प्रोक्तक्रमतो ज्ञातृतया स्वसंवेदनसिद्धे ज्ञातव्य इति शास्त्रं कृतकत्वेनानर्थकमेव । यच्छ्रूयते

'यस्तन्न वेद किमृचा करिष्यति
य इत्तद्विदुस्त इमे समासते'

इति । ततोऽत्रात्मशब्देनेश्वर एव ज्ञातव्यतयोपदिश्यते इत्यभ्युपगन्तव्यम् ॥

अपिच

नृरुद्रसंज्ञे चैकार्थे
दृश्येते हि क्वचिन्मनौ ॥ १०१ ॥

यथा रुद्रेष्वथर्वशिरसि 'स एवात्मा स एवेश्वर' इत्यत्रात्मशब्दस्येश्वरे प्रयोगो दृश्यते एव ॥ १०१ ॥

किमत इत्याह

**क्रियार्थं साधनं दृष्टं**
**तत्स्वरूपावभासकम्।**

अतश्च 'आत्मा ज्ञातव्यः' इत्यादेरीश्वरप्रतिपत्तिकर्तव्यतानिष्ठत्वेन तत्प्रयुक्तेश्वरस्वरूपप्रतिपादनैकवाक्यतयास्य प्रामाण्यं भवद्भिरपि अभ्युपगन्तव्यमेव ॥

अत्र परः

**मूर्तिमत्त्वेन देवानां**
**कृतत्वं ननु तद्भवेत् ॥ १०२ ॥**

यदाहुः

'चर्मोपमश्चेत्सोऽनित्यः खतुल्यश्चेदसत्समः।'

इति। ततः पूर्वोक्तकारकत्वानुपपत्तिरस्येति ॥ १०२ ॥

आचार्यस्तु मूर्तिमत्त्वमभ्युपगम्याप्येतत् प्रतिक्षिपति

**न सालादिषु तद्दृष्टं**
**स्वरूपं प्रतिपादयेत्।**

नैतत् अनैकान्तिकत्वात्, यथाहि सालखदिरादीनाम-

नित्यानामपि 'अत्र खदिरे बध्नाति' इत्यादिश्रुतिभिः कारकत्वम् एवं देवतानामपि प्रोक्तश्रुतिभिर्भविष्यतीति को विरोधः ॥

अथ नैषां क्रियार्थत्वं
देवतास्वपि तत्समम् ॥ १०३ ॥

अथ जातेरिव नित्यायाः स्तोत्राङ्गत्वमित्यभ्युपगमात् अनित्यानां खदिरादिविशेषाणां कारकत्वं नेष्यते तर्हि देवतात्मनो नित्यस्यैवात्राङ्गत्वं नतु तच्छरीराणां परपुरप्रवेशन इवोपादेयपरित्याज्यत्वेनानित्यानामिति सर्वं समानम् । अत एव यागसाधनत्वान्यथानुपपत्त्या युगपद्विभिन्नदेशव्यवस्थितानेकाधिकार्यनुष्ठीयमानानेकक्रतुसाधनत्वं देवतायाः प्राकाम्यतोऽनेकनिर्माणकायरचनेन कल्प्यते इति ऐश्वर्यसिद्धिः ॥ १०३ ॥

नन्वत्र ब्रह्मेन्द्ररुद्रादीनां बहूनां देवतात्वेन श्रुतेर्मतिभेदसंभवादीश्वरासिद्धिरित्याह

ईश्वरे तु विशेषोऽसौ
तज्ज्ञानादेव गम्यते ।

श्रुतित एवेश्वरविषयो विशेषोऽसौ प्रतीयते । यतः श्रूयते

'इन्द्रं मित्रं वरुणमग्निमाहु-
रथो दिव्यः स सुपर्णो गरुत्मान् ।

एकं सद्विप्रा बहुधा वदन्ति
अग्निं यमं मातरिश्वानमाहुः ॥' (ऋ० वे० १। १६४। ४६)

इति । एक एवेश्वरोऽधिष्ठेयभेदात् अनेकत्वेन राजा नियोगभेदेनेव व्यपदिश्यते स च रुद्र एव । यच्छ्रूयते 'एक एव रुद्रोऽवतस्थे न द्वितीयः'। 'शतं शता सहस्राणि ये रुद्रा अधिभूम्याम्' इति तस्यैव भगवतो रुद्रेषु वैश्वरूप्यप्रतिपादनात्। ननु गुणत्वेन देवतायाः श्रुतेर्दध्यादीनामिव नेश्वरता । न, संप्रदानकारकत्वेन तस्याः प्रधानत्वात् कर्तुरीप्सिततमेन 'कर्मणा यमभिप्रैति स संप्रदानम्' । यद्येवं, सर्वस्यैव कर्मणो दार्शपौर्णमासादेः 'ऐन्द्रं दध्यमावस्यायाम्' इत्यादिश्रुतिसिद्धेन्द्रादिदेवतार्थत्वात् गुणकर्मत्वेन न विधिविषयता, तदुक्तं

'यैस्तु द्रव्यं चिकीर्ष्यते गुणस्तत्र प्रतीयते ।'

इति । न, आत्मोपदेशवदातिथ्यवच्चोपपत्तेः । यथाहि 'आत्मा ज्ञातव्यः' इत्यात्मकर्मकोऽपि भावार्थः, यथा च 'अतिथये समभ्यागताय महोक्षं महाजं वा आलभेत' इत्यातिथ्यर्थमपि कर्म चोदितत्वेन अनुष्ठेयत्वात् विधिविषयमिष्यते भवद्भिस्तद्वदेतदपि भविष्यतीत्यविरोधः । कुतस्तर्हि फलम् । देवतात एव भवतामिव वा नियोगतः, यथाहि 'ग्रामकामो राजपुत्रसेवां कुर्यात्' इत्यादौ राजपुत्रसेवाविषयात् राजनियोगतः फलम् ए-

वमत्रापि देवताराधनविषयात् नियोगत एव फलमिति । ननु राजपुत्रादावाराधनसंपत्तिः प्रमाणान्तरसिद्धा । भवतु, इह तु शास्त्रसिद्धा तदविकलक्रियाद्यनुष्ठानतः श्रद्धाप्रामाण्येन वा प्रतीयते इत्युक्तं महामतिभिः देवताकाण्डे । त्रिकाण्डो हि वेदविचार[1]ः क्रियाकाण्डदेवताकाण्डोपनिषत्काण्डभेदेन जैमिनिमुनिप्रभृतिभिः सूत्रकारैरारब्धः, स तु कर्मकाण्डमात्रदर्शिभिर्मीमांसकैरज्ञानतः कर्ममात्रविषयत्वेन नीतः । अत एव त आहुः

'न बुद्धिभेदं जनयेदज्ञाना कर्मसंगिनाम् ।' (भ० गी० ३।२६)

इति । आचार्यो देवताकाण्डसिद्धवाक्यार्थाविरोधेन कर्मकाण्डस्यापि देवताप्रामाण्यं योजयितुमत्रोक्तवान्

'ईश्वरे तु विशेषोऽसौ तज्ज्ञानादेव गम्यते ।'

इति ॥

अत एवोपनिषत्काण्डदृष्ट्याप्याह

**धर्मशास्त्रे विशुद्धिर्या**
**परमा पुरुषस्य हि ॥ १०४ ॥**

**ईश्वरप्रणिधानाच्च**
**योगशास्त्रेऽपि पठ्यते ।**

---

[1] ख० ग० पु० वेदार्थविचार इति पाठः ।

वेदान्ते हि ईश्वराध्यात्माकृतिप्राणविराड्भूतेन्द्रियेषु मध्यात् ईश्वरोपासनयैव मोक्षः श्रूयते, स्मृत्यादावपि अग्निहोत्रादीष्टवत् पूर्तो धर्म ईश्वरसपर्यात्मकः

'पक्केष्टकाचितं सम्यग्यः करोति शिवालयम्।'

इति च श्रूयते

'पूर्ते मोक्षं विनिर्दिशेत्।'

इति, वायुपुराणादौ च

'अनुपास्येश्वरं मोक्षो बद्धस्येव कुतो भवेत्।'

इति, महाभारतादिष्वपि इतिहासेषु कुण्डधारोपाख्यानादौ, गीतासु च

'यो मामजमनादिं च वेत्ति लोकमहेश्वरम्।
असंमूढः स मर्त्येषु सर्वपापैः प्रमुच्यते॥' (भ० गी० १०।३)

इति। ईश्वरोपासयैव पातञ्जलेष्वपि मोक्ष इति न तद्भावोऽभ्युपगन्तव्यः सर्वागमविरोधात्॥

ननु योगशास्त्रेषु ईश्वरप्रणिधानात् समाधिलाभः पठ्यते न मुक्तिरित्याह

**क्लेशग्रामस्य तनुता**
**समाधिस्तत्फलं फलम्॥ १०५॥**

अविद्यास्मितारागद्वेषाभिनिवेशाः क्लेशाः, तत्समुदाय-

स्यापचिततरत्वमुपशम एव समाधिहेतुत्वात् समाधियोगश्चि-त्तजयात्मक इति ईश्वरप्रणिधानस्य धियो तदिति मोक्षफल-मेव समाधिलक्षणं फलं न ततोऽन्यादित्यविरोधः ॥१०५॥

ननु एवं सति सावयवात्मना मूर्तिमत्त्वेन वेदवेदा-र्थयोरनित्यत्वादप्रामाण्यमित्याह

स्थिता सन्ततिरूपेण
 देवता तत्र चाकृतिः ।
शब्दार्थयोरनित्यत्वं
 मूर्तिमत्त्वेन बाध्यते ॥ १०६ ॥

यतः परपुरप्रवेशिपुरुषवत् उपादेयपरित्याज्यशरीरस-न्तत्यात्मना देवता वेदार्थभूता व्यवस्थितेत्युक्तं यत-श्च तत्र शब्देऽर्थे च जातिः स्थिता ततो मूर्तिम-त्त्वेन यत् शब्दार्थयोरत्रानित्यत्वमप्रामाण्यसाधनायोक्तं तत् बाध्यते जातेरिवात्र स्थिरायाः प्रमाणप्रमेयत्वव्यवस्थापनात् यदाहुः 'जातिरेवाङ्गम्' इति मीमांसकाः ॥ १०६ ॥

उपसंहर्तुमाह

एवं च कल्प्यमाने स्यात्
 को दोषो येन संश्रितम् ।
नास्तिक्यं देवतासत्त्वं
 गदद्भिः पण्डितैरपि ॥ १०७ ॥

एवं वेदस्य देवताप्रधानत्वेऽपि प्रामाण्यसिद्धेर्निष्प्रयोजनमेव देवतायाः अभावख्यापनेन मीमांसकैर्नास्तिकपक्षः संश्रित इत्याचार्यः

'प्रायेण[1] मौर्ख्यान्मीमांसा लोके लोकायतीकृता ।
तामास्तिकपथे कर्तुमयं यत्नः कृतो मया ॥' (श्लो० वा० प्र० १०)

इत्येतदपि दर्शयति ॥ १०७ ॥

यद्येवमीश्वरप्रणीतत्वेन वेदः प्रमाणं वेदाच्चेश्वरसिद्धिरितीतरेतराश्रयदोषः । यदाहुः 'एवं वेदोऽपि तत्पूर्वस्तत्सद्भावादौ वचने साशङ्को न प्रमाणं स्यात्' इति । एतत् प्रतिक्षिपति

ईशोक्तत्वेऽपि नैवेष्टा
तत्कृतत्वेन मानता ।
अन्योन्याश्रयता तस्मा-
द्दोषो नानित्यवादिनाम् ॥ १०८ ॥

नहि ईश्वरकृतत्वेन प्रमाणं वेदोऽस्माभिरिष्यते तनुकरणादिभिरनैकान्तिकत्वात् अपितु प्रमाणं सत् ईश्वरकृत इतीश्वरकृतत्वेऽपि शास्त्रस्य नान्योन्याश्रयदोषः ॥ १०८ ॥

कथं तर्ह्यस्य प्रामाण्यमित्याह

शास्त्रस्य मानता सिद्धा
न्यायतः प्राक्प्रभाषितात् ।

१ प्रायेणैव हि मीमांसेति मुद्रितपुस्तकस्थः पाठः ।

तनुकरणभुवनादिवैलक्षण्येन प्रमाजनकत्वादेव प्रत्यक्षादेरिवास्य प्रामाण्यमित्युक्तं 'वाक्याद्धि सर्वतः पूर्वमर्थे धीः' इत्यादिना । प्रोक्तं च भवद्भिरपि

'स्वतः सर्वप्रमाणानां प्रामाण्यम् ।' (श्लो० वा० चो० सू० ४७)

इति । नित्यत्वमनित्यत्वं च प्रामाण्येऽनुपकारकमेव ॥

किमेवमीश्वरप्रयुक्तत्वमपि शब्दस्यात्रानुपकारकमेव । न, इत्याह

ईशोक्तत्वादमानत्वं
जातुचिन्नोपपद्यते ॥ १०६ ॥

कृतकत्वात् रथ्यापुरुषवाक्यवदप्रामाण्याशङ्का अस्य केवलमीश्वरप्रणीतत्वेन निवर्त्यते । रथ्यापुरुषाणां हि कामक्रोधादियोगेन दृष्टं विपरीताभिधानम्, ईश्वरस्य तु तदभावात् पित्रादेः पुत्रादाविव सर्वत्रोपकारायैव प्रवृत्तेर्न तथात्वमित्यदोषः ॥ १०६ ॥

ननु निष्प्रयोजनमत्र वेदस्येश्वरकर्तृकत्वसाधनमित्याह

समानत्वे ततः कृत्ये
परितुष्टः प्रवर्तते ।

यो हि मोहात् वेदस्य नित्यत्वेन
कृतकत्वेनात्राप्रामाण्यमध्यारोप्य न प्र
वा अन्येन निषिद्धयते, तं प्रति
पतिशास्त्रसाम्यप्रतिपत्तये तु दीक्षित

पाद्यते इति न निष्प्रयोजनमेतदिति ॥

पुनः प्रयोगान्तरभ्रान्त्या कारिकाभागेन परः

असर्ववित्कथं देवं
जानातीति

यदाह

'सर्वज्ञो गृह्यते तावन्नेदानीमस्मदादिभिः।
नास्त्यतोऽनुपलभ्यत्वात्[१]पुंसामश्वविषाणवत् ॥'

(श्लो० वा० चो० सू० ११७)

इति ॥

एतदप्ययुक्तमित्याह

उक्तमानतः ॥ ११० ॥

साक्षाच्च सेवनीयो हि
योगस्तेनादरात्ततः।
स्वन्यवादादिसिद्धेन
संस्कृतात्मोऽञ्जनादिना ॥ १११ ॥

यथा पश्यति सूक्ष्माद्य-
पीतरेषामतीन्द्रियम्।
कृतात्मा तु योगेन
तथा योगी प्रपश्यति ॥ ११२ ॥

---

[१] तश्लोकवार्तिकपुस्तके न दृश्यते।

माहेश्वरेण वस्तूनि
सर्वाणि परमेण तु ।

आगमसिद्धवस्तुक्रमाभ्यासजेन परमेण योगेन समभिव्यक्तज्ञानातिशयो योगी सर्वाण्येवातीन्द्रियाणि ईश्वरादीनि वस्तूनि पश्यति यथा सिद्धाञ्जनादिना संस्कृतनेत्रः पुरुषः पुरुषमात्रागोचराणि अत्यन्तव्यवहितानि निधानादीनि इति योगिप्रत्यक्षसिद्धेश्वरे असदाद्यग्रहणमसिद्धत्वात् नाभावसाधनमिति ॥

ननु योग एव तावन्न सिद्धः कुतस्तेनेश्वरदर्शनम् । नात्र असिद्धता । इत्याह

दृष्टा च प्रातिभेनेह
वाक्यार्थव्याप्तिं विना ॥ ११३ ॥
मेये त्रिष्वपि कालेषु
लिङ्गानि च विना मतिः ।
प्रातिभस्य तथा योगी
प्रकृष्टेन तु सर्वथा ॥ ११४ ॥
मिनोति युगपत्सर्वं
तत्सिद्ध्यै योगचोदना ।

यथा 'श्वस्ते भ्रातागमिष्यति' इति आगमानुमानाभ्यां विना प्रातिभेनैव योगेन प्रातिभस्य पुंसः त्रिकालावि

संवादिनी मतिर्दृष्टा तथैव योगिनोऽपि योगेनैवेश्वरादि-विषया भविष्यतीति संभावनानुमानासिद्धत्वात् योगप्रतिक्षेपस्तावदयुक्तः, चोदनासिद्धत्वाच्च । वेदान्तेषु हि

'आत्मानमरणिं कृत्वा प्रणवं चोत्तरारणिम् ।
ध्याननिर्मथनाभ्यासाद्देवं पश्येन्निगूढवत्' ॥ ( कैवल्योपनि० ११ )

इत्यादयो योगचोदनाः स्मृतीतिहासपुराणादिषु च सन्ति,— इति योगिज्ञानमप्रतिक्षेप्यमेव ॥

न च तेषां चोदनावाक्यानामप्रामाण्यमित्याह

व्यभिचारो न यस्य स्या-
दप्रमाणं कथं हि तत् ॥ ११५ ॥
तच्चोदितक्रियाकर्ता
तत्फलाप्ता च नो कथम् ।

'अङ्गुल्यग्रे हस्तियूथशतमास्ते' इत्यादौ व्यभिचारदर्शनात् लौकिकं वाक्यमप्रमाणमित्युक्तम् । न च चोदनावाक्यस्य व्यभिचारः कस्याचिदपि अस्ति इत्येतत् प्रमाणमेव चोदनासिद्धेश्वरादिप्रमितिक्रियाकर्तरि मोक्षफले विशिष्टे योगात्मनि स्वाभिधेय इति ॥

अन्यथा

वेदोऽपि तत्समानत्वा-
न्न मानं नापि भोगकृत् ॥ ११६ ॥

विशेषाभावात् कर्मकाण्डप्रतिपादकस्यापि 'ज्योतिष्टोमेन यजेत' इत्यादेर्वेदभागस्याप्रामाण्यं स्वर्गादिफलकर्तृत्वाभावश्च प्रसज्येत इति ॥ ११६ ॥

अत्र पराभिप्रायः

इष्यतेऽत्रोभयं तच्चेत्

अथास्मिन् भागे प्रामाण्यं स्वर्गादिफलकर्तृत्वं चेति उभयमिष्यते ॥

आचार्य आह

योगेऽप्येतत्तथेष्यताम् ।

न्यायस्य समानत्वात् योगप्रतिपादकेऽपि वेदान्तादौ प्रामाण्यं मोक्षफलकर्तृत्वं च सिद्धमिति योगिनः प्रमाणसिद्धत्वात् तज्ज्ञानस्येश्वरे प्रवृत्तिसिद्धेरस्मदाद्यदर्शनमसिद्धत्वान्न तदभावसाधनमिति ॥

उपसंहरति

इत्थं सर्वप्रमाणानां
गोचरो हर ईरितः ॥ ११७ ॥

एवं चानुमानागमयोगिप्रत्यक्षैरीश्वरः सिद्ध इति तदभावाभिधानादज्ञतैव भवतामिति ॥ ११७ ॥

अधुना ईश्वरस्वरूपं विप्रतिपत्तिनिराकरणेन प्रतिपादयति

स च स्वभाववैमल्यात्
कार्ममायीयवर्जितः ।

तत्कार्यस्य कार्ममायीयस्य प्रवाहतोऽनादित्वात् सोऽपि तत्कर्तृत्वादेवानादिसिद्धः स्वभावविमलत्वेनोक्तः, आदिसिद्धस्य हि मुक्तात्मनः प्राग्बन्धसद्भावतः स्वभाववैमल्यासंभवात् । ततश्च ये कर्मविशेषानुष्ठानात् शतक्रतुवत् ईश्वरं, ये तु पातञ्जला बुद्ध्यादिसामर्थ्येन, नैयायिका वैशेषिकाश्च मनोयोगादाहुस्ते प्रतिक्षिप्ताः । तथाभूतस्य पुरुषवत् संसारित्वेनेश्वरत्वायोगात् ॥

ननु मुक्तशिववत्तस्यापि ईश्वरान्तरादैश्वर्यमिति प्रवाहनित्येश्वरवादिनः । तान् प्रतिक्षिपति

परस्मात्तस्य वैमल्ये
मुक्तात्मासौ ततश्च सः ॥ ११८ ॥

कुतस्तु विमलो येन
स्वभावविमलो ह्यसौ ।

भवेदेतत् यदि ईश्वरताया विनाशः स्यात् स तु नास्तीति वक्ष्यामः, ततश्चोत्पाद्योत्पादकयोर्द्वयोरपि ईश्वरयोः सान्निधानात् पूर्वः पूर्वतरो वा स्वभावविमलोऽभ्युपगन्तव्य इति कुतः प्रवाहनित्येश्वरवादः ॥

अत एव

वैमल्यात्तस्य नो कर्म
निर्मलः कर्मकृन्नहि ॥ ११६ ॥
मलकर्मविहीनत्वा-
न्मायीयं नो कलादिकम् ।

आणवस्य बन्धस्याभावात् कार्मस्यापि अभावस्तयोरभावात् मायीयस्यापि,—इति सर्वबन्धविहीनो भगवान् सिद्धः । कर्माभावेऽपि संस्कारतः चक्रभ्रमवत् धृतशरीरत्वात् केषांचित् समलानामेव मायीयो बन्धोऽस्ति इति द्वयोरत्रोपादानम् । तदुक्तं स्वायम्भुववृत्तौ—'मलमायाख्ययुक्तानामपि अनुग्रहः संभवति' इति ॥

अत एव च

निष्कलत्वात्कलाद्युत्था
रागद्वेषादयः कुतः ॥ १२० ॥

मायीयबन्धाभावादेव तदात्मकानां तस्य रागद्वेषादीनामभावः सिद्धः,—इति पुरुषकृतकर्मानुसारेण सुखदुःखादिप्रदत्वं न रागद्वेषादिभिरित्युक्तं

'येन यादृग्विधं कर्म'

इत्यादि ॥ १२० ॥

कथं तर्हि

'सकलं चैव यो वेत्ति सदाशिवम्'

इत्यादौ
ईश्वरः सकलः प्रोक्त इत्याह

स लोकेशो महेशानो
गीतः शक्तिकलान्वितः।

सकलो हि सशरीरः कथ्यते, शक्तय एव तस्य शरीरमित्युक्तम्

'ज्ञानक्रिये शिवः प्रोक्तः सर्वार्थे निर्मले परे।'

इति ॥

किंच

सकलोऽपि च शक्त्यैव
सर्वं वेत्ति करोति च ॥ १२१ ॥

सकलस्य आत्मनोऽपि शक्तिरेव शरीरं तयैव सर्वत्रोपयोगात्, तदुपकारकत्वाच्च इदं बाह्यमुपचारेण शरीरमित्युच्यते ॥ १२१ ॥

ततः किमित्याह

शक्तिस्तेन कलापिण्डः
सकलश्च महेश्वरः।

तेन शक्तिरेवानेककार्योपयोगात् कलापिण्डः शरीरं परमार्थतः कथ्यते इति ईश्वरः सकलः प्रोक्तः ॥

स एव तु

शक्तिपिण्डकलावत्त्वा-
च्छक्तिमान्निष्कलः स्मृतः ॥ १२२ ॥

'शक्तिशरीरत्वादेव तस्य बाह्यकलाद्यात्मकं शरीरं नास्ति इति निष्कलः । यदुक्तं मोक्षकारिकासु

'न कलादिकलापिण्डसंबद्धोऽसौ यथा पशुः ।
कदाचिदपि देवेशस्तस्माद्गीतस्तु निष्कलः ॥'

इति । ततश्च सकलनिष्कलयोर्न परमार्थतो भेद इत्युक्तं भवति । यदुक्तं तत्त्वसंग्रहे

'अत्र च तत्त्वद्वितयं बोधध्यानादिसिद्धये गदितम् ।
अमूर्तिश्च तद्वांश्चेति च लेशादुक्तिश्च शक्तिशक्तिमतोः ॥'

इति ॥ १२२ ॥

अत्रैव मतान्तरमाह

चेष्टावान्सकलः कैश्चित्
तद्वियुक्तस्तु निष्कलः ।

यदा स्थित्यादिकर्माणि विधत्ते तदा सकलः, समुपहृतक्रियस्तु निष्कल इति कैश्चित् सकलनिष्कलयोरवस्थाभेदेन भेदः स्मृतो न वस्तुतः । तदिदमुक्तं

'ईशः सदाशिवः शान्तः कृत्यभेदाद्विभिद्यते ।'

इति ॥

यद्येवं पुरुषस्यापि एवं सकलनिष्कलात्मकत्वसंभवात्ततः को भेदोऽस्येत्याह

विमलत्वाच्च सर्वार्थ-
संबद्धे तस्य दृक्क्रिये ॥ १२३ ॥

दृक्क्रियावारकस्य मलस्यापि अभावादेव युगपत् सर्वार्थसंबद्धे तस्य ज्ञानक्रिये, पुरुषस्य मलावृतत्वात् क्रमेणेति भेदः ॥ १२३ ॥

अपिच

सर्वकर्तृत्वतश्चापि
सर्वज्ञः सोऽधिगम्यते।

न केवलं विमलत्वात् यावत् प्राक्प्रदर्शितात् सर्वकर्तृत्वादपि ईश्वरः सर्वज्ञः सिद्ध्यति॥

कथमित्याह

कुम्भकारो यथा वेत्ति
सर्वं सफलकारकम् ॥ १२४ ॥
सर्वकर्ता तथा वेत्ति
सर्वं सफलकारकम्।

यथा प्राग्गृहीतमूल्यसंशुद्धये मृदादिना अनेन घटं करिष्यामीति कुंभकारादिः कर्ता स्वकार्ये सर्वज्ञः सन्

कर्ता दृष्टः तथैव भगवानपि सर्वकर्तृत्वात् सर्वस्मिन् स्वकार्ये ज्ञः सिद्ध्यतीति सर्वज्ञः प्रोक्तः ॥

यद्येवं कर्तृत्वस्य क्रमेण दर्शनात् ततो विज्ञानमपि क्रमेण सिद्ध्यतीति युगपत् सर्वज्ञत्वाभावस्तस्येत्याह

**मोच्योत्पाद्योपसंहार्य-**
**निरोध्यप्रेर्यवस्तुषु ॥ १२५ ॥**

**एककालभवेष्वेषु**
**युगपत्कर्तृता मता ।**

क्रिया हि क्रमिका न कारकत्वं कुम्भकारादावपि युगपदनेकभोजनगमनादिक्रियासु कर्तृत्वसिद्धेरिति एषु मोच्यादिषु कार्येषु निमित्तभूतेषु भवविषया भगवतो युगपत्कर्तृता यतोऽतश्च ज्ञानमपि युगपदेव सिद्ध्यति इति न विरोधः ॥

अत एव तस्य त्रिकालामलज्ञानसिद्धिरित्याह

**तच्च त्रिकालकं तेन**
**यदित्थं वेत्ति शंकरः ॥ १२६ ॥**

**अनेनेदं कृतं कर्म**
**देयं चास्येदृशं फलम् ।**

एवं हि सर्वकृत्येषु

त्रिकालविषयं हि तत् ॥ १२७ ॥

बोद्धव्यं नान्यथा शम्भोः

स्यादितः कृतकृत्यता ।

तदिदमुक्तं 'कुम्भकारो यथा वेत्ति' इत्यादिना ॥

अत एव

प्रमाणं तच्च शैवाख्यं

पशुमानविलक्षणम् ॥ १२८ ॥

द्वारद्वारिकया कृत्यं

साक्षाच्चेष्टं तु तत्फलम् ।

यथावस्थितं सर्वमेव वस्तु तेन प्रमीयतेऽतः पशुमानविलक्षणं तत् प्रमाणम् । प्रयोजनं तु तस्येश्वरज्ञानस्य विद्येश्वरादिद्वारेण पञ्चविधजगत्कृत्यसंपादनं साक्षाच्च विद्याविद्येश्वराद्यनुग्रह इति ॥

पशुप्रमाणस्यैतद्विलक्षणं स्वरूपमाह

सदाक्षलिङ्गवाक्यैश्च

व्यक्तं ज्ञानं तु पौद्गलम् ॥ १२९ ॥

प्रत्यक्षमनुमानं च
शब्दं चेत्युदितं क्रमात् ।

इन्द्रियाद्युपायत्रयभेदात् प्रत्यक्षानुमानागमभेदेन त्रिविधं परिमितविषयं चेति ॥

अथ कथं तद्वोपायापेक्षं न पारमेशमित्याह

शैवं न व्यञ्जकापेक्षं
ज्ञानमावृतिहानितः ॥ १३० ॥

गुरुभिः पशुमानेभ्यो
गीतं तेन विधर्मकम् ।

मलादिपाशैरनावृतत्वात्पारमेशं नेन्द्रियाद्युपायापेक्षमर्थेषु प्रवर्तते,—इति पशुप्रमाणाविलक्षणमुक्तम् ॥

अत एव

न सन्देहविपर्यास-
रूपं तदनपेक्षणात् ॥ १३१ ॥

ज्ञानमेतत्पशौ यस्माद्
दृष्टं व्यञ्जकदोषतः ।

पशुज्ञानवत् इन्द्रियाद्युपायानपेक्षणात् न तत् संश्ले-

षदोषैर्मिथ्यात्वाज्ञानसंशयैर्युज्यते,—इति तद्विलक्षणम् ॥

नापि गृहीतग्राहित्वे स्मृतिरूपं तादित्याह

सर्वदैवोदितत्वाच्च
स्मार्तं तदपि नो भवेत् ॥ १३२ ॥

ग्राहकात्मनो ज्ञानस्य प्रथमकाण्ड एव नित्यत्वेनैकतया प्रतिपादितत्वादध्यवसायज्ञानस्यैव स्मृत्यादिभेदः संभवति,—इत्यतोऽपि तद्विलक्षणम् ॥ १३२ ॥

किमत इत्याह

इत्थं च मानरूपेण
विहीनं मानमेव तत् ।

अतश्च संशयादिरहितत्वे सति अर्थसाक्षात्कारात्मकत्वात् इन्द्रियप्रत्यक्षवत् तदपि ईश्वरप्रत्यक्षं प्रमाणमेव ॥

अत्र परः

नन्वदेहस्य विज्ञानं
न कर्तृत्वं च युक्तिमत् ॥ १३३ ॥

शंकरस्य यतः पुंसां
देहादौ सति दृश्यते ।

विज्ञानस्य देहाविनाभावो देहपारतन्त्र्यमस्मदादिषु सिद्धम्,—इत्यर्थात् देहाभावेन सह विरोधसिद्धेरदेहसर्वज्ञत्वं प्रयोगान्तरेणात्र निषिध्यते इति अपौनरुक्त्यम् । यदाह मण्डनो विधिविवेके

'परतन्त्रं बहिर्मनः'

इति ॥

एतत् प्रतिक्षिपति

न युक्तिमच्छरीरादि-
निषेधे मानमीरितम् ॥ १३४ ॥

सर्वज्ञत्वादिसिद्धौ च
महेशस्य यतः स्फुटम् ।

नैतत् युक्तम् यतो मध्यमकाण्डे 'कुलालसमतां पत्युः' इत्यादिना तस्य शरीरादि प्रतिषिद्धम् अत्र च सर्वज्ञत्वं प्रसाधितमिति अशरीरत्वसर्वज्ञत्वयोर्विरोधाभावात् न सहावस्थानानुपपत्तिरिति न विरुद्धोपलम्भोऽयं सर्वज्ञत्वाभावसाधनः ॥

ननु पारतन्त्र्यं बहिर्मनोदृष्टान्तसिद्धमित्याह

संरुद्धत्वाच्च तत्पुंसां
व्यक्तौ देहाद्यपेक्षते ॥ १३५ ॥

यदि अत्र मनोऽन्तःकरणमभिप्रेतं तत् व्यधिकरणासिद्धो हेतुः। तस्य पारतन्त्र्यात् सर्वज्ञत्वस्य का अनुपपत्तिः, नहि मनोयोगात् तत्र सर्वज्ञत्वं पुरुष इव उपपद्यते इत्युक्तम्। प्रातिभयोगिनां च पूर्वनयेनेन्द्रियानपेक्षया स्वातन्त्र्येणैव मनसो बाह्यार्थे प्रवृत्तिसिद्धेरनैकान्तिकश्च। अथ मनो ग्राहकात्मैव विवक्षितम् तत् इन्द्रियादिपारतन्त्र्यं भवतां परमात्मादौ अदर्शनात् अविद्यापरुद्धत्वेन सिद्धमितीश्वरे तदभावात् तस्यापि अभाव इत्यदोषः॥

ननु रूपादिग्रहणमिन्द्रियादिकरणकं पुरुषे सिद्धमिति ईश्वरे तदभावात् तस्यापि अभाव इति करणानुपलब्ध्या सर्वज्ञत्वनिषेधोऽयं भविष्यतीत्याह

**नचाप्येवंविधं कार्यं**
**देहादौ सति दृश्यते।**

प्रतिपादितनयेन प्रातिभानां योगिनां चेन्द्रियं विना रूपादिग्रहणं मानसप्रत्यक्षेण चान्येषां दृष्टमिति न सर्वमेव रूपग्रहणमिन्द्रियादिकरणकं सिध्यति अपितु विशिष्टमेव। यदाहुः

'संबद्धं वर्तमानं च गृह्यते चक्षुरादिना।'

इति। ततश्च इन्द्रियाद्यभावात् तत्र तथाभूतस्यैव रूपादिग्रहणात्मनः कार्यस्याभावः सिद्ध्यति न अकरणस्य त्रिकालामलानन्तविषयस्यापि,—इत्यदोषः॥

ये त्वाहुः 'नास्तीश्वरो बुद्धादिभिः सर्वज्ञैरदृष्टत्वात् शशविषाणवत्' इति तान् प्रत्याह

प्रसिद्धमानगम्यानि
वस्तून्यप्यन्यथैव ये ॥ १३६ ॥

कथयन्ति स्म बुद्धाद्या-
स्ते कथं सर्ववेदिनः।

भवेदेतत् यदि सर्वज्ञत्वं तेषां सिद्धं स्यात् तत् तु प्राक्प्रदर्शितप्रमाणसिद्धात्मादिवस्त्वदर्शनात् तेषामसिद्धमेव इत्यसाधनम् ॥

तथा

महाज्ञानबलाद्येऽपि
ध्रुवान्तं कथयन्ति हि ॥ १३७ ॥

सर्वज्ञानक्रियायुक्तं
पृष्टास्तेऽपि न शक्नुयुः।
निर्वक्तुं सर्वशब्दार्थ-
मपवादविवर्जितम् ॥ १३८ ॥

यावन्नः शैवसिद्धेश-
दृक्क्रियागोचरं बुधाः।

येऽपि महाव्रताः शैवाभिधानेन पृथिव्यादिध्रुवान्तानर्थान् सर्वमिति कथयन्ति ते सर्वज्ञं पृष्टाः सन्तः सर्वशब्दार्थं निरपवादं वक्तुं न शक्नुवन्त्येव। यतस्तैः प्रकृत्यादिकारणत्वेन कलैव ध्रुवपदेन प्रोक्ता इति तदन्तस्यैव सर्वशब्दाभिधेयता, तावन्मात्रस्य ज्ञश्च सर्वज्ञो गीयते न मायादेरपीति ततो न यावत् अस्मद्दर्शनप्रसिद्धेश्वरगोचरं सर्वमेव शिवाद्यवनिप्रान्तं वस्तु पश्यति इत्युच्यते तावत् सर्वज्ञं प्रतिपादयितुं निरपवादं च सर्वशब्दार्थं व्यवस्थापयितुं न शक्यमेव। अतोऽस्मद्दर्शनप्रसिद्ध एव सर्वज्ञो न दर्शनान्तरप्रसिद्ध इत्यदोषः ॥

एवं सर्वकर्तापि स एवेत्याह

मन्त्रमन्त्रेश्वरेभ्योऽपि
महेशे महती क्रिया ॥ १३९ ॥

मन्त्रमन्त्रेशानां सर्वज्ञत्वेऽपि मायाविषयसर्वकर्तृत्वयोगतः शुद्धेऽध्वनि कर्तृत्वासंभवात् न ईश्वरवत् सर्वकर्तृत्वमिति तेभ्योऽपि विशिष्ट एव ॥ १३९ ॥

किंच

मुक्तेभ्योऽपि विशिष्टोऽसौ
स्वभावविमलत्वतः ।

मुक्तशिवानां सर्वज्ञत्ववत् ईश्वरतुल्यसर्वकर्तृत्वयोगेऽपि

अनादिसर्वज्ञत्वसर्वकर्तृत्वाभावात् न तत्समत्वम् ॥

न केवलमनादिरेव

**विभुश्चासौ यतस्तस्य**

**दृक्क्रियालक्षणो गुणः ॥ १४० ॥**

**सर्वार्थगो विना नो यद्**

**गुणिनो गुणसन्निधिः ।**

सर्वत्र तच्छक्तिकार्यस्य स्थित्याद्यनुग्रहात् तस्य दर्शनात् शक्तीनामिव तस्यापि व्यापकत्वं शक्तिमता विना शक्तेरसंभवो यतः ॥

किंच

**नित्यश्च तं विना कालः**

**कश्चित्संभाव्यते न यत् ॥ १४१ ॥**

नहि ईश्वररहितः कश्चित् काललवोऽपि संभावयितुं शक्यः तत्कार्यस्य स्थित्यादेरनुपपत्तितः संसारस्य आसमञ्जस्यप्रसङ्गात्,—इति अविनश्वरेश्वरसिद्धिः ॥ १४१ ॥

ननु तदैवान्यो भविष्यतीति प्रवाहनित्येश्वरवादिनः प्रतिक्षिपति

**दृक्क्रियागुणवत्त्वाच्च**

**कारणाभावतश्च सः ।**

नित्य इति अनुवर्तते। यो दृक्क्रियागुणयुक्तः स नित्यो यथा आत्मा, दृक्क्रियागुणयुक्तश्चेश्वरः तस्मात् अविनश्वरः। यश्च अकारणः स नित्यो यथा आत्मादिः, अकारणश्च ईश्वरः प्रोक्तः ततोऽपि अविनश्वरः इति न प्रवाहानित्येश्वरवादः ॥

यदप्याहुः

'जगच्च सृजतस्तस्य किं प्रयोजनमुच्यताम्।
प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते ॥
एवमेव प्रवृत्तिश्चेच्चैतन्येनास्य किं भवेत्।'

(श्लो० वा० सं० ५५)

इति। तत्राप्याह

**मलाद्यभावतस्तस्य**
**चेष्टा न स्वात्मभूतये ॥ १४२ ॥**

**युक्ता नापि स्वभोगाय**
**सर्वज्ञत्वादियोगतः।**

निर्मलत्वेन प्राप्तप्राप्तव्यस्य न तावत् तस्य पुरुषस्येव स्वात्मनो मोक्षार्था सर्वज्ञत्वाच्च नापि भोगार्था प्रवृत्तिरुपपद्यते भोगस्याज्ञानानुबन्धित्वेन सर्वज्ञेऽनुपपत्तेरुक्तत्वात् ॥

नापि क्रीडार्थेत्याह

क्रीडार्था युज्यते चेष्टा
सा नोक्तव्यतिरेकतः ॥ १४३ ॥

वर्तते तन्निषेधेन
तस्यास्तेन निषेधतः।

क्रीडाद्यर्थमपि न तस्य चेष्टा युज्यते तद्धेतुत्वेनोक्तस्य मलादेर्व्यतिरेकात् अभावतः, मलादिहेतुका हि पुरुषेषु क्रीडा दृष्टेति मलादेस्तत्र निषेधादेव तस्या अपि निषेधः । तदुक्तं भवद्भिरपि

'क्रीडार्थायां प्रवृत्तौ तु विहन्येत कृतार्थता।'
(श्लो० सं० चो० प० ९६)

इति ॥

इतश्च न तस्य स्वार्था क्रीडाद्यर्था वा चेष्टेत्याह

किंचेशे व्यापृते पुंसा
भुक्तिर्मुक्तिश्च दृश्यते ॥ १४४ ॥

चेष्टातः पुंस्फलायैव
स्वाभाव्यात्तस्य गम्यते

प्रागुक्तक्रमेण च मोक्षस्येश्वरव्यापारं विनानुपपत्तेः तस्य परार्थमेव चेष्टा परोपकारस्वाभाव्यादेव प्रतीयते नान्यतः ॥

मुक्तेरीश्वरकर्तृत्वं प्रतिज्ञातं साधयितुं स्वरूपमाह

**मुक्तिः परेशतुल्यत्वं**
**मन्त्रमन्त्रेशतापरा ॥ १४५ ॥**

सर्वज्ञत्वकर्तृत्वे स्वभावः पुरुषस्येत्युक्तम् । अतस्तत्स्वरूपावाप्तिः परमेशतुल्यत्वं परा मुक्तिः । अपरा तु वक्ष्यमाणमन्त्रमन्त्रेशतुल्यतेति ॥ १४५ ॥

सा चेश्वरेण क्रियते नतु ज्ञानमोक्षवादिनामिव पुरुषेणेत्याह

**स्वयं करोत्यणुर्नैतां**
**पाशरुद्धबलत्वतः ।**

ननु ज्योतिष्टोमाद्यनुष्ठानेन स्वर्गादिभोगवत् 'आत्मा ज्ञातव्यः' इत्याद्यनुष्ठानात् पुरुष एव मोक्षं करिष्यतीति पाशरुद्धबलत्वस्य मोक्षकर्तृत्वेन सह विरोधासिद्धेरनैकान्तिकता । कः पुनरत्र पाशोऽभिमतो भवताम् । ननु अज्ञानमेव, तत् किं वस्तु अवस्तु वा । अवस्तुत्वे तस्य च शशविषाणादेरिव नित्यनिवृत्तत्वात् तन्निवर्तको ज्ञानानुष्ठानविधिरेषोऽनर्थक एव । वस्तुत्वे यदि पुरुषस्वभाव एव ततो नित्यत्वव्यापकत्ववत् अनिवर्त्यत्वात् अनिर्मोक्षः, व्यतिरेके तु आवारकस्वभावं चक्षुषः पटलादिवत् अज्ञानहेतुत्वात् अज्ञानशब्दवाच्यं

द्रव्यान्तरमेव तत् अभ्युपगन्तव्यम् । द्रव्यस्य चावारकस्य तमसः पटलादेरिव ज्ञाननिवर्त्यस्वभावासिद्धेः पाशरुद्धबलत्वस्य मोक्षकर्तृत्वेन सह विरोधः सिद्ध इति नात्रानैकान्तिकतेति ॥

तर्हि कृतप्रयोजनत्वात्पाशाः स्वयमेव पुरुषं मुञ्चन्तीति सांख्याः । यदाहुः

'रङ्गस्य दर्शयित्वा निवर्तते नर्तकी यथा नृत्तात् ।
पुरुषस्य तथात्मानं प्रकाश्य विनिवर्तते प्रकृतिः ॥'
(सां० का० ५९)

इति । अत्रापि आह

पाशा अपि न कुर्वन्ति
यतस्ते तन्निरोधकाः ॥ १४६ ॥
न चापि बन्धनं बध्यं
विमुञ्चद्दृश्यते यतः ।

नहि अत्यन्तपरिपाकात् कृतप्रयोजनत्वेन निश्चितोऽपि पटलादिः स्वयमावारकत्वेन वा निवृत्तिस्वभावः सिद्धो येन मोक्षेऽपि एतत् कल्प्यमानमुपपद्यते ॥

यत एतत् तस्मात्

बलीयान्पशुपाशेभ्य-
स्तन्मोचकतया हरः ॥ १४७ ॥

**स एव मोचकस्तस्मा-**
**त्सर्वस्माद्भवबन्धनात्।**

चक्षुरादेः पटलादिनिवृत्ताविव पाशनिवृत्तौ ईश्वर एव हेतुः नान्यः॥

ननु शुक्तिकारजतादिभ्रमेषु ज्ञानस्याज्ञाननिवृत्तौ पुसा सामर्थ्यं सिद्धम् अतो मोक्षोऽपि तथैव भविष्यति इत्याह

**पुंसां सापेक्षशक्तीनां**
**सदानावृतशक्तिकः॥ १४८॥**
**युज्यते शक्त्यभिव्यक्तौ**
**नेत्राणां भानुमानिव।**

इह प्रथमकाण्डोक्तज्ञानवदज्ञानमपि द्विविधमध्यवसायात्मकमेव विषयसादृश्याविवेकेन शुक्तिकारजतादिषु विपरीतज्ञानात्मकमुत्पद्यते इति युक्तैव तस्य प्रतिपक्षभूतात् सम्यग्ज्ञानात् निवृत्तिः। यत् पुनरनध्यवसायात्मकं तत् द्रव्यान्तरात् अन्धकारादेर्भवत् स्वहेतुविपक्षात् द्रव्यान्तरादेवादित्यादेर्निवृत्तिस्वभावं सिद्धं न प्रतिपक्षज्ञानात्। अनध्यवसायात्मकं च पौरुषमज्ञानं सुषुप्तावस्थासु इह पूर्वं प्रतिपादितम् अध्यवसायात्मनो बौद्धत्वात्। अतस्तदपि स्वहेतुविपक्षभूतात् ईश्वरादेव वस्त्वन्तरात् निवृत्तिस्वभावमनुमीयते इति स एव मो-

त्वहेतुः सिद्ध्यति नत्वात्मानः, तज्ज्ञानस्य तत्र सामर्थ्यासिद्धेरिति अदोषः ॥

कथं तर्हि 'आत्मा ज्ञातव्यः' इत्याद्याः श्रुतयः इत्याह

एष्टव्यं चेदृशं तत्त्वं
नान्यथा मुक्तिसंभवः ॥ १४६ ॥

ता अपि अत एवेश्वरप्रतिपत्तिकर्तव्यतानिष्ठा एवाभ्युपगन्तव्या इत्युक्तम् अन्यथा मोक्षायोगात् ॥

ननु वरममोक्षोऽस्तु नत्वीश्वर इत्यनिर्मोक्षवादिनः । यदाहुः

'अनादित्वाद्भवः पुंसां न कदाचिन्निवर्तते ।
ततः सुखासुखप्राप्तिनिवृत्ती शाश्वतः स्मृते ॥'

इति । अत्रापि आह

भवितव्यं तया पुंसां
सर्वावाप्त्यर्हता ध्रुवम् ।

सर्वावरणानिवृत्तिस्वभावाः पुरुषा आवरणप्रकर्षापकर्षाभ्यां मूढाद्यवस्थासु अपकृष्टप्रकृष्टतत्स्वरूपोपलम्भात् मेघावृतसवितृवत् इति नानिर्मोक्षोऽभ्युपगन्तुं युक्तः तन्नेश्वरासिद्धिः । नच भवस्यानादित्वं कर्महेतुत्वात् । यदुक्तम्

'कर्मतश्च शरीराणि विषयाः करणानि च ।'

इति ॥

न चागमविरुद्धोऽयं पक्ष इत्याह

ईशान्मोक्षोऽन्यथा नैव
पुंसामेतन्निरूपितम् ॥ १५० ॥

तथा च श्रीपौष्करे

'न मोक्षं याति पुरुषः स्वसामर्थ्यात्कदाचन ।'

इति । श्रीमद्दीक्षोत्तरेऽपि

'शिवादेवात्मनां मोक्षः'

इति । ईश्वरव्यापारात्मकत्वाच्च दीक्षायाः श्रीमत्स्वायंभुवेऽपि निरूपितम्

'दीक्षैव मोचयत्यूर्ध्वं शैवं धाम नयत्यसौ ।'

इति ॥ १५० ॥

ननु एवमपि केषांचिदनिर्मोक्षदर्शनादीश्वरे रागद्वेषसंभावनेत्याह

न रागो नापि च द्वेष-
स्तस्येत्येतच्च युक्तितः ।

ईश्वरस्य रागद्वेषाद्यभाव इति निरूपितं मध्यकाण्ड

एव इत्ययमपि न दोषः ॥

नचापुरुषार्थभूतत्वात् वैशेषिकादीनामिवायमपि मोक्षो न केनचिदाश्रीयते इत्याह

वाञ्छा चाणोः सदैवास्ति
सर्वस्यैवोत्तमे पदे ॥ १५१ ॥

अतस्तद्दीयमानं तु
न कदाचिन्न मन्यते ।

नहि सर्वबन्धनिवृत्त्या सर्वैश्वर्यप्राप्तौ कश्चित् निरभिलाषः संभवतीति ॥

यद्येवमीश्वरस्य निरपेक्षित्वात् कथं न युगपत् सर्वेषां मुक्तिरित्याह

अणवनुग्रहसामर्थ्यं
सर्वथा चास्ति शंकरे ॥ १५२ ॥

तथापि युगपन्मुक्ति-
र्नाणूनां तेन दृश्यते ।

कुत इत्याह

सृष्टौ योनेर्यथा कालं
महेशानो व्यपेक्षते ॥ १५३ ॥

प्रोत्सारणे तथा कालं
मलस्यासावपेक्षते ।

यथा हि मयातः सर्गनिमित्तं कर्मपरिपाककालापेक्षित्वेन भगवतो न युगपत् सर्वभोगप्रदत्वमित्युक्तं प्राक्। एवं मोक्षनिमित्तं मलपरिपाकापेक्षित्वात् न युगपत् सर्वेषां मोक्षप्रसंगो निरपेक्षित्वस्यैवासिद्धेः ॥

अत्र पराभिप्रायमाह

अपरेऽपि स्वतन्त्रोऽसौ
रोचन्ते ये यथा यदा ॥ १५४ ॥

पुमांसस्तस्मै देवाय
तेषां मुक्तिस्तदा तथा ।

स्वतन्त्रो हि परमेश्वरः शक्तत्वेनान्यानपेक्षणात्, अन्यापेक्षायां तु सापेक्षमसमर्थं भवतीति असमर्थ एव ईश्वरः स्यात्। अतो यो यथा परापरमुक्तिसंबन्धितया तस्मै रोचते तं तथैव योजयति नतु मलपरिपाकादि अपेक्षते ॥

एतत् प्रतिक्षिपति

पुनर्भवप्रसङ्गः स्या-
त्स्वातन्त्र्यादिति नो यतः ॥१५५॥

नैतत्, यतो मोक्ष इव संसारेऽपि कर्तव्येऽसौ स्वतन्त्र एव इति मुक्तस्यापि पुनः संसारं कुर्यात् । दुष्कृतिनोऽपि स्वर्गं सुकृतिनश्च नरकमिति मोक्षशास्त्राणां सत्कर्मानुष्ठानानां चानर्थक्यात् लोकायत एव उपास्यो भवताम् ॥ १५५ ॥

अथ तत्र कर्मविपाकापेक्षया नैष प्रसङ्ग इत्युच्यते, यद्येवम्

स्वभावस्तस्य नैतादृक्
प्रमितः शंकरस्य हि ।

न तर्हि अनपेक्षस्वभावः सिद्धोऽसौ,—इति भोगेऽपि कर्मविपाकमिव मोक्षे मलविपाकमपेक्षिष्यते,—इति को विरोधः । नच कर्माद्यपेक्षितैवास्वातन्त्र्यम् अपितु ईश्वरान्तरायत्तता । सा च तस्य परमेश्वरत्वादेव नास्तीत्युक्तं मध्यमकाण्डे ॥

किंचागमविरुद्धोऽयं पक्ष इत्याह

उक्तं च तेन तत्तुल्यः
प्राप्नोति न भवान्तरम् ॥ १५६ ॥

प्रतिपादयितुं शक्यं
नापि मिथ्येति तद्वचः ।

तथाहि श्रीमत्स्वायंभुवादौ

' अनाद्यशुद्धिशून्यत्वात्प्राप्नोति न भवान्तरम् । '

इति यदुक्तं तत्स्वतन्त्रशक्तिपातपक्षे नोपपद्यते पुनर्भवप्रसङ्गस्य तत्रावश्यंभावादित्युक्तं यतः । नच पारमेश्वरं वचनमप्रमाणमित्युक्तं प्रागेव, ततः पुनर्भवप्रसङ्गसिद्धेर्न स्वतन्त्रः शक्तिपातोऽपितु मलपरिपाकापेक्ष एवेति न युगपत् सर्वेषां मोक्षप्रसङ्गः । यथाच्च मलपरिणतेरपि नैष प्रसङ्गः तथोक्तमाचार्येण तत्त्वत्रयनिर्णय एवेति तत एवावधार्यम् ॥

रूपान्तरेण स्वातन्त्र्यं शक्तिपातस्य समर्थयितुमागमार्थमाक्षिपति

पत्या पुमर्थसिद्ध्यर्थं
स्रष्टा मन्त्राः सनायकाः ॥ १५७ ॥
तेषामेकोऽपि तत्कर्तुं
शक्नोति बहुभिस्तु किम् ।

सप्तकोटिसंख्याता मन्त्रा, अष्टौ अनन्तेशादयो मन्त्रेशा भगवता पुरुषार्थसिद्ध्ये निर्मिता इति आगमार्थ एकेनैव तत्सिद्धेरयुक्त इति ॥

एतत् प्रतिक्षिपति

अनुग्रहोऽपि संभूति-
स्तेषां चानुग्रहादरः ॥ १५८ ॥

कृत्ये नियोगः शैवोक्तो
नोत्पत्तिः कृत्यसिद्धये ।

बहूनां हि तदानीं तुल्ययोग्यतया आदरोऽनुग्राह्य-मन्त्रमन्त्रेश्वरत्वेन युगपदनुग्रहो नतु अधिकारार्थमेवोत्पत्तिः,—इति उत्पत्तौ तावन्न दोषः । ननु अधिकारो भविष्यति । न, अत एवात्र शक्तिपातस्य स्वातन्त्र्यासिद्धेरदोषः ॥

अत्र परः

मन्वनुग्रहतः शैवा-
ज्जातास्तुल्यबलास्तु ते ॥ १५९ ॥

प्रेर्यप्रेरकभावो हि
तेषां तेन न युज्यते ।

मन्त्रमन्त्रेश्वराणां परमेश्वरानुग्रहात् मुक्तात्मनामिव शिवसमानत्वमेवेति

'तेऽधिकारं प्रकुर्वन्ति शिवेच्छाविधिचोदिताः ।'

इत्यादिश्रुतिविरोधस्तं परिहरति

सर्वज्ञानोदयस्तुल्य-
स्त्वाधिपत्यं विशिष्यते ॥ १६० ॥

नाभिव्यक्तं हि तत्तादृ-
क्तेषां यादृङ्महेश्वरे ।

अत एव शिवेच्छाविधिचोदितत्वश्रुत्यन्यथानुपपत्त्या न तेषां मुक्तशिववत् क्रियाशक्त्यापि शिवसमत्वमभिव्यक्तमिति प्रतीयते, अपितु 'सर्वज्ञज्ञानसंयुताः' इति श्रुतेः ज्ञानशक्त्यैवेत्यविरोधः ॥

अपिच

अधिकारो हि संस्कार-
स्तेषां चैवावधीयते ॥ १६१ ॥

यतः कृताधिकारास्ते
व्रजन्ति शिवतुल्यताम् ।

यतः परमेश्वरेणासावधिकारात्मकः संस्कारस्तेषां सावधिरेव विहितः । यच्छ्रूयते

'अनन्तोपरमे तेषां महतां चक्रवर्तिनाम् ।
विहितं सर्वकर्तृत्वं कारणं परमं पदम् ॥'

इति ततोऽपि न शिवसमानत्वम् ॥

अत्र मतान्तरमाह

तुल्यत्वेऽप्यर्थनिष्पत्ति-
र्नान्यथेत्यपरे जगुः ॥ १६२ ॥

शिष्या इव गुरोः शंभो-
स्ते तच्चित्तनियोगिनः ।

शिवतुल्यत्वेऽपि मन्त्रमन्त्रेश्वराणां तदीयाधिकारकारित्वं शिष्याणामिव भविष्यतीति केचित् । तैस्तु दृष्टान्तेन साम्यमत्र चिन्त्यम्, शिष्याणां हि गुरुसाम्येऽपि तदीयनियोगाकरणात् प्रत्यवाययोग्यता नतु तेषां शिवसमत्वं यतः ॥

प्राक्शरीराभ्युपगमेनेश्वरस्य कारकत्वं प्रतिपादितम्, अधुना तत्प्रतिक्षेपेणाह

इच्छामात्रेण देवेशः
कृत्यकृन्न प्रयासतः ॥ १६३ ॥
इच्छा च तस्य कृत्येषु
न प्रतीघातमश्नुते ।

मात्रग्रहणमवधारणार्थम् । इच्छयैवाव्याहतप्रसरया भगवतः कर्तृत्वं न शरीरकरणादिप्रयासेनेति तेषामभावोऽनुपयोगात् ॥

ननु यः कर्ता नासौ शरीरादिप्रयासानपेक्षः अव्याहतेच्छो वा यथा देवदत्तादिः, कर्ता चेश्वरोऽतस्तथाभूत एवेति । अत्रापि आह

प्रयासकरणात्पुंसा-
मिच्छा व्याघातधर्मिणी ॥ १६४ ॥

पशुत्वात्तच्च देवस्य
निषिद्धं न्यायवर्त्मना।

सर्वज्ञत्वसर्वकर्तृत्वसद्भावेऽपि पुंसां मलावृतत्वात् कार्ये शरीराद्यपेक्षित्वमनीश्वरत्वं चेत्युक्तम्। ईश्वरस्य तु तद्भावात् तयोरपि अभावः॥

ननु इच्छामात्रेण पुंसां कर्तृत्वमदृष्टमित्याह

स्तोभादिकर्मसंसिद्धि-
रिच्छामात्रेण दृश्यते॥ १६५॥

पुंसां प्रकृष्टमन्त्रादि-
स्वभावाविद्धचेतसाम्।

सिद्धमन्त्राणां हि विषादिस्तोभादिकार्यमिच्छामात्रेण पुरुषाणामपि दृश्यत एव॥

एतदेव दर्शयति

पशुर्बन्धनबन्धी स
प्रभावातिशयाद्धि तत्॥ १६६॥

इच्छयैव करोतीशः
कुर्यान्नेति किमद्भुतम्।

बन्धनानां विषादीनां बन्धः स्तोभादिः प्रागुक्तः

स यस्यास्ति स पशुः कार्यकारणयुक्तः प्रागुक्त एव पुरुषो मन्त्रप्रभावातिशयादिच्छामात्रेण तं स्तोभादिकं करोति नतु ईश्वरः तथाभूतप्रभावातिशय इत्याश्चर्यम् ॥

यदपि आहुः केचित्

'नचानिमित्तया युक्तमुत्पत्तुं ह्रीश्वरेच्छया ।
यद्वा तस्या निमित्तं वस्तद्भूतानां भविष्यति ॥'

इति । तत्रापि आह

इच्छायाः कारकग्राम-
स्पृष्टाः केचित्प्रचक्षते ॥ १६७ ॥

निमित्तं वस्तु मोच्यादि
तज्ज्ञानं करणं त्विति ।

मोच्योत्पाद्यादिवस्तुयोग्यतैवेच्छायाः समुत्पादे निमित्तमस्मदादौ तथैव सिद्धेः, करणं तु तद्विषयं कर्तुर्ज्ञानमितीश्वरेऽपि तथैवोपपत्तेर्न किञ्चिदेतत् ॥

एकानेकविभेदोऽपि तस्या नाहेतुक इत्याह

एककालविनिष्पाद्ये-
ष्वेकरूपेषु वस्तुषु ॥ १६८ ॥

एकैवेच्छा तथानेका
कालरूपविभेदिषु ।

स्थितिसंरक्षणादिविषयाकारभेदाभेदाभ्यां स्थित्यादावपि कालभेदाभेदाभ्याम् अस्या भेदाभेदाविति नाहेतुकौ ॥

सा च क्रियाशक्तेर्नान्येत्याह

वामादिकः क्रियाशक्ते-
भेदो यः सोऽपि गम्यते ॥ १६९ ॥

इच्छायाः सर्वकृत्यानि
तयैवेशः करोति यत् ।

यतः सर्वकार्येषु अस्मदादीनामपि इच्छैव अविनाभाविनी कारकतया सिद्धेत्युक्तं मध्यमकाण्डे, ततः सैव क्रियाशक्तिर्वामादिभेदैर्भिन्ना भगवतः शास्त्रे प्रतिपादिता,—इत्यवगन्तव्यं न ततोऽन्येति तस्या असिद्धेः ॥

सा च नियवरवात्मस्वरूपाव्यतिरेकात् आत्मरूपाया ज्ञानशक्तेरपि अभिन्नेति दृष्टान्तेन दर्शयति

गुरुभिः कमलाश्लिष्टा
यथैवार्कस्य दीधितिः ॥ १७० ॥

तत्प्रकाशं विकासं च
करोतीति द्विधोच्यते ।

तथैव शक्तिरेकैव

संश्लेषादिव वस्तुषु ॥ १७१ ॥

विज्ञप्तिं तत्क्रियां चैव

करोतीति द्विधोच्यते।

यथाहि सवितुर्दीधितिः कमलेषु आश्लिष्टा प्रबोधप्रकाशौ विदधाति इति द्विधा उच्यते; तथैव भगवतः शक्तिर्वस्तुषु प्रकाशविकासौ विदधती द्विविधा,—इति कार्यभेदात् भेदेन व्यपदिश्यते नतु परमार्थतो भेदोऽस्याः स्यादिति ॥

तथैव

ज्ञेयाधिष्ठेयनिष्पाद्य-

भेदादेकापि भिद्यते ॥ १७२ ॥

वामादिभिरनेकैस्तु

भेदैः शक्तिर्न मुख्यतः।

ज्ञानशक्तेर्ज्ञेयभेदेनैव क्रियाशक्तेः कार्यभेदेन च भेद इत्युक्तं पुरुषपरीक्षायाम्, ततश्च वामादिभेदोऽपि तस्याः कार्यभेदोपाधिको न मुख्यत इति ॥

येनैवमिच्छैव क्रियाशक्तिः

प्रयासेन विनेशानः

कृत्यकृत्तेन गीयते ॥ १७३ ॥

तेन कारणेन स्वदेहस्पन्दादौ कुम्भकारादिरिवेश्वरोऽपि शरीरान्तरप्रयासानपेक्षतया जगति कर्ता प्रोक्तो नान्यथेति ॥ १७३ ॥

अत्र परः

इच्छामात्रात्करोतीति
नन्विच्छा नास्य विद्यते ।

युज्यते एतत् वक्तुं, यदीच्छास्य संभवेत् । सा तु मनोवृत्तित्वादस्य च कार्यकरणानभ्युपगमेन मनसोऽसंभवात् न संभवतीति ॥

एतत् प्रतिक्षिपति

शक्तेः प्रवृत्तिः कृत्येषु
विशिष्टा प्रोक्तलक्षणा ॥ १७४ ॥
व्यापारः कारणस्येच्छा
तन्नियोगाय चोच्यते ।

नेच्छा मनोवृत्तिरपितु कर्तुः क्रियाशक्तेः कार्याय प्रवृत्तिरिच्छा प्रोच्यते सर्वव्यापारेषु पूर्वभावित्वेनास्याः सिद्धत्वादित्युक्तम् यतः शास्त्रेष्वपि ईश्वरस्य व्यापारतया व्यापारनियोगाय विद्येश्वरेषु चोच्यते ।

यदुक्तम्

'तेऽधिकारं प्रकुर्वन्ति शिवेच्छाविधिचोदिताः ।'

इति ॥

कथं तर्हीच्छा मनोवृत्तिः सांख्यादिभिर्गीयते इत्याह

तादृग्व्यापारसङ्गीता
शक्तिरिच्छा क्वचिन्मता ॥ १७५ ॥

यथाहि अध्यवसायादिना बुद्धिव्यापारेणोपोद्बलितत्वात् ज्ञानशक्तिरेव बुद्धिबोध इत्युच्यते, नतु बुद्धेर्जडतया वस्तुतो बोधः संभवत्येवं क्रियाशक्तिरेवेच्छात्मिका मनोव्यापारेण मनोराज्याद्यवस्थासु सिद्धेनापूर्वनिर्माणात्मना अभिव्यज्यमानत्वात् मनोवृत्तिरिति क्वचित् सांख्यादौ उच्यते, नतु परमार्थतस्तस्यापूर्वनिर्माणशक्तिरुपपद्यते निर्माणस्येश्वररूपत्वेन जडेऽनुपपत्तेरिति ॥ १७५ ॥

अस्मिंस्तु शास्त्रे

अर्थान्तरं विना कृत्यं
कुर्वती च प्रगीयते ।

मनोलक्षणार्थान्तरं विना ईश्वरस्य कार्यं कुर्वती इच्छा गीयते, सकलस्य तु मनोलक्षणार्थान्तरापेक्षयेति चशब्दार्थः ॥

उपसंहरति

एका सर्वार्थगा शक्ति-
र्भिन्ना चेच्छा न जातुचित् ॥१७६॥

एवं च ज्ञानक्रियात्मिका शक्तिरेकैव, नैव चेच्छा ततोऽन्येति सिद्धम् ॥ १७६ ॥

ननु कार्यभेदादिच्छायास्ततः शक्त्यन्तरत्वमस्तु, यद्वेष्यमाणानां प्रकाशरूपत्वेन सुखादिप्रकाशानामिव बोधात्मकत्वात् ज्ञानरूपत्वमेव न क्रियाशक्तिरूपतेत्याशङ्क्याह

शक्तावुक्तं यतोऽस्तीदं
तेन नाधिककल्पना ।

क्रियाशक्तिसिद्धिनिमित्तं यत् साधनमुक्तं तदेवेच्छायां यतोऽस्ति तेन कारणेन न ततोऽधिका काचिदिच्छा नापि ज्ञानरूपेति । एतदुक्तं भवति–स्वदेहस्पन्दादिक्रियाहेतुत्वेन स्वसंवेदनात्मकसाधनसिद्धा क्रियाशक्तिरिच्छैव वस्तुतश्च पुत्रादेर्ज्ञानशक्त्यवभासितस्य 'ममेदं स्यात्' इति आत्मसंबन्धितानिर्माणस्वभावत्वान्न ज्ञानरूपा अपि तु क्रियाशक्तिरेवेति । तदिदमुक्तं मन्त्रवार्तिके

'शाक्तस्य हि तन्मनसास्विवच्छा सैषा क्रियाशक्तिः' ।

इति । तदेवं

'इच्छामात्रेण देवेशः कृत्यकृन्न प्रयासतः ।'

इति सिद्धम् ॥

ननु सिद्धसाधनमेतदित्याह

नचापि विमतिर्नास्ति
सर्वस्यैषाप्रसिद्धितः ॥ १७७ ॥

नहि मीमांसकबौद्धलौकायतिकानामेतत्सिद्धमिति न सिद्धसाधनम् ॥ १७७ ॥

तर्हि असिद्ध एवायं पक्ष इत्याह

तथापि विगतभ्रान्ति
ग्राह्यः पक्षो यथागमम् ।

यद्यपि विषयतामयं पक्षो भवद्भिर्नीतस्तथापि विगतभ्रान्ति अभ्रान्तिकं कृत्वा अस्मदुपदर्शितस्यात्र हेतोरत्यन्तं परीक्षां विधाय ग्राह्यो नोपरोधेनेति । यदुक्तम्

'परीक्ष्यभ्रान्तितो ग्राह्यं मद्वचो नतु गौरवात् ।'

इति ॥

ननु 'सिद्धसाधनमेतत्' इति साङ्ख्याः, योगिनां सत्त्वात्मनः कर्मजैश्वर्यस्य तैरभ्युपगमात् । यदुक्तम्

'धर्मेण गमनमूर्ध्वं गमनमधस्ताद्भवत्यधर्मेण ।' [सां० का० ४४]

'ऊर्ध्वं सत्त्वविशालस्तमोविशालश्च मूलतः सर्गः ।
मध्ये रजोविशालो ब्रह्मादिस्तम्बपर्यन्तः ॥' (सां० का० ५४)

इति ॥

अत्राप्याह

सर्वाधिपत्यमैश्वर्यं
कर्माभावान्न धर्मजम् ॥ १७८ ॥
अथास्तातिशयाच्छम्भो-
स्तेन स्वेच्छाविधाय्यसौ ।

अन्यदेव तत् योगिनां परिमितमैश्वर्यं कर्मजत्वात् क्षयातिशययुक्तं च तैरिष्यते । अन्यदेव तु इदं सर्वार्थविषयमाद्यन्तरहितत्वेन प्रतिपादितत्वादकर्मजम् इच्छामात्रकारकत्वेन प्रतिपादितमिति न सिद्धसाधनता ॥

ननु ततोऽपि प्रकृष्टैश्वर्ययुक्तोऽन्यो भविष्यतीत्याह

स्वात्मैश्वर्यप्रभावेन
तद्येनास्यातिशय्यते ॥ १७९ ॥
महेश्वरः स एव स्या-
दयं नैवेश्वरस्तदा ।

तर्हि स एव परमेश्वरोऽस्माभिरिष्यते इत्यदोषः ॥

न च ततोऽपि अन्यो भविष्यतीत्यनवस्थेत्याह

परिमाणवदैश्वर्यं
सर्वत्रातिशयान्वितम् ॥ १८० ॥
क्वचिच्चातिशयापास्तं
यत्र तत्स महेश्वरः ।

योऽतिशयान्वितः स संभवत्क्वचित्प्रकर्षपर्यन्तावस्थितिः ननु अनवस्थायुक्तो यथा परमाणुतो महन्महत्त्वातिशययुक्तः क्वचिदेव स्थितः परममहत्त्वान्तः परिमाणः, अतिशयान्वितश्चायमैश्वर्यविशेष इति सोऽपि संभवत्क्वचित्प्रकर्षपर्यन्तावस्थितिर्यत्र तथाभूतः स एव परमेश्वर इति नानवस्था ॥

प्रकरणमुपसंहर्तुं प्रयोजनमस्यादावाह

**एवं सर्वोत्तमं शंभुं**
**ज्ञात्वा सर्वफलप्रदम् ॥ १८१ ॥**
**सदालोकयतः श्रेयः**
**सद्यः सर्वं च नान्यतः ।**

एवमत्र प्रदर्शितसाधकबाधकप्रमाणसदसत्तानिश्चयपूर्वं प्रोक्तनयेन दर्शनान्तरप्रसिद्धेभ्यः प्रकृतिपुरुषादिभ्य ईश्वरेभ्यः सातिशयमीश्वरमत एव सर्वफलप्रदं ज्ञात्वा तमेव भावयतः तत एव दीक्षाक्रमेणाविलम्बतः परं श्रेयो मुक्तिः सिद्धिश्च भवतीति प्रयोजनसिद्धिरिति उक्तमस्माभिरन्यत्र

'प्रणमत शिवनाथं शाश्वतं शर्महेतो-
रितरविषयसेवादुर्ग्रहं प्रोज्झ्य यत्नात् ।
न स भवति भवेऽस्मिन्नापि भूतो न भावी
तदितरनुतितो यः शर्मयुक्तः पुमान्स्यात् ॥

इति ॥

अधुना उपसंहरति

इत्थं शर्वपरीक्षां तु
पुंस्परीक्षापुरःसराम् ॥ १८२ ॥
चकार मृदुबुद्धीनां
हितायातिस्फुटामिमाम् ।
सद्योज्योतिः, समानो यं
शिवेन गुरुसत्तमः ।
कृपयैवानुजग्राह
ह्युग्रज्योतिर्गुणाकरः ॥ १८३ ॥

एवं च प्रोक्तनयेन ईश्वरपरीक्षाक्षिप्तैव नरपरीक्षेति तत्प्रयोजनेनैव सप्रयोजनेति सिद्धम् ॥ १८३ ॥

---

दर्शनमात्राच्छ्रीमत्सद्योज्योतिस्तमो निहन्त्युग्रम् ।
सततावलोकनेन तु सद्दृष्टीश्चन्द्र इव विवर्धयति ॥

---

नरेश्वरपरीक्षणेऽतिगहनत्वतो नैव य-
द्गतिर्जगति गम्यते विततबुद्धिवेगिष्वपि ।
इमं परहितेच्छया तु ननु रामकण्ठस्ततः
कुतर्कतमसां नुदं विहितवान्प्रकाशं स्फुटम् ॥

इति श्रीनारायणकण्ठसूनुभट्टरामकण्ठकृतौ
नरेश्वरपरीक्षाप्रकाशे परदर्शनप्रसिद्धेश्वर-
प्रतिक्षेपाख्यं तृतीयं काण्डम् ॥
संपूर्णश्चायं नरेश्वरपरीक्षाप्रकाशः ॥

---

श्रीमच्छ्रीहरिभूभर्तुराज्ञया प्रीतये सताम् ।
मधुसूदनकौलेन संपाद्येयं प्रकाशिता ॥

| Page | Line | Read | For |
|---|---|---|---|
| १ | १३ | परीक्षां | परीक्षा |
| ३ | ५ | संयोगेऽपि | संयोगोऽपि |
| ३ | ६ | इति ॥ १ ॥ इयं च | इति । इयं च |
| ५ | ७ | एवंविधावगम | एवंविधां वागम |
| ८ | ३ | इति ॥ कार्येऽर्थे | इति । कार्येऽर्थे |
| ,, | १७ | सिद्धिरेव ॥ ४ ॥ यद्येवं | सिद्धिरेव, यद्येवं |
| १० | ७ | कस्यान्यस्य सिद्धिः | कस्यासिद्धिः |
| ११ | २० | ननु विज्ञानस्य | विज्ञानस्य |
| १४ | १ | भिन्नक्षणमात्र | क्षणमात्र |
| ,, | २ | वाभिन्नः | व भिन्नः |
| ,, | ६ | वृत्त्यन्तरालेष्वपि | वृत्त्यन्तरालेऽपि |
| ,, | १३ | वा यतः | वा, यतः |
| १५ | १ | यत्नः | विषयः |
| ,, | ४ | ध्यारोप | ध्यानोप |
| ,, | ६ | तदारोपका | आरोपका |
| ,, | ८ | प्रकाशकत्वेन | प्रकाशत्वेन |
| ,, | ११ | तदप्रतिभासित्वे | तत्प्रतिभासित्वे |
| ,, | १६ | गता विकल्पाः | गततां विकल्पः |
| १६ | १८ | नुत्पत्तिरेव | नुपपत्तिरेव |
| ,, | २० | शात्माना | शात्मा ना |
| ,, | २२ | कारणेना | कारणा |
| १७ | ३ | सर्वार्थान् | सर्वान् |
| ,, | ८ | नन्वर्थवत्तत्प्रका-शिकाभिन्नैव | न तु अर्थवत्तत्प्रकाशाभिन्नैव |
| १८ | १ | स्याध्यक्षसंवेद्यत्वतः | स्याध्यक्षः, तत्र संवेद्यत्वतः |
| ,, | १२ | फलादरूपान्तर | फलात् । अरूपान्तर |
| ,, | १६ | प्रतिक्षिप्तः ॥ ज्ञानस्य तस्मा | प्रतिक्षिप्तः ज्ञानस्य । तस्मा |
| १९ | ८ | अपिचासौ | अत्रापि चासावपि |
| १९ | १७ | अर्थविशेषव्यवस्था | अतो विषयव्यवस्था |
| २० | ७ | प्रत्ययापत्तेः | प्रत्ययानुपपत्तेः |
| २१ | १३ | भासेनार्थोऽर्थो | भासेऽनर्थेऽर्थो |

| Page | Line | Read | For |
|---|---|---|---|
| २१ | २० | स्वात्मन्यस्या | स्वात्मन्यस्य |
| २४ | ७ | तस्याः | तस्य |
| ,, | १२ | कथमस्य | कथमर्थस्य |
| ,, | १३ | लोका | लौका |
| ,, | २१ | परस्परो | परंपरो |
| २५ | १६ | अनिराका | निराकारा |
| २६ | २२ | प्रतिपरमाणुज्ञानभेदतः | प्रतिपरमाणु ज्ञानभेदतः |
| २७ | १० | क्रमप्रकाशेऽपि | क्रमप्रकाशोऽपि |
| ,, | १७ | समुच्चये | समुच्चयो |
| २८ | ८ | सिद्धाभेदस्य | सिद्धभेदस्य |
| ,, | १६ | रूपाभेद | रूपभेद |
| २९ | १३ | प्रसङ्गात ॥ ६ ॥ अर्थैत | प्रसङ्गात् । अर्थैत |
| ३२ | ८ | रूपत्वसिद्धितो | रूपसिद्धितो |
| ३३ | ५ | शब्देना | शब्दो न |
| ३८ | १६ | अध्यवसेयेन | अध्यवसायेन |
| ,, | २१ | अध्यवसायस्यापि | अध्यवसेयस्यापि |
| ,, | २२ | अध्यवसेयस्येव | अध्यवसायस्येव |
| ४१ | १२ | तदानीमसंवेदनान्न सिद्धिः | तदानीं संवेदनान्नासिद्धिः |
| ,, | १४ | स्येव सिद्धेः | स्येवासिद्धेः |
| ४२ | ५ | स्मृतिः | विस्मृतिः |
| ,, | २१ | घटादौ | न घटादौ |
| ४३ | २ | अविमर्शात् | अवमर्शात |
| ,, | १४ | अर्थस्य दूर | अर्थ दूर |
| ,, | ,, | आगमोक्तो | आगमोत्थो |
| ,, | १८ | सातिशयो | सोऽतिशयो |
| ४६ | ५ | सुखाद्यननुभव | सुखाद्यनुभव |
| ,, | १७ | हर्षादिलिङ्गसिद्धात् स्मरणा | हर्षादिलिङ्गविशिष्टस्मरणा |
| ,, | १९ | क्रान्तम | क्रामन्त |
| ४७ | १९ | इव वा | इव |
| ४९ | ३ | सत्त्वाख्यमेव हेतुः | सत्त्वाख्यमेव |
| ,, | ७ | रूपत्वे वा | रूपत्वेना |
| ५० | १ | नयैव चा | नैव चा |

| Page | Line | Read | For |
|---|---|---|---|
| ५१ | ३ | दृष्टान्तो | दृष्टान्ते |
| ,, | ८ | असद्धेतूपन्या० | असिद्धेरुपन्या० |
| ,, | १० | व्यतिरेकिता | व्यतिरेकता |
| ,, | १३ | योगादिति,ना | योगादि ना |
| ५२ | ८ | सिद्धः | सिद्धिः |
| ,, | १० | अधिष्ठानत्वात् | अधिष्ठानात् |
| ,, | १६ | आश्रयात् | अनाश्रयात् |
| ,, | २० | यद्येवं सपक्ष | यद्येवमपक्ष |
| ५३ | ३ | सत्त्वं हि | सत्त्वं |
| ,, | ६ | दोषोऽत्र | दोषत |
| ५४ | ८ | सपक्षत्वात् | सपक्षात् |
| ५५ | ११ | प्रोक्तः प्र | प्रोक्तप्र |
| ५६ | १५ | तर्हि | ते हि |
| ,, | १७ | कारणं | करणं |
| ,, | १९ | निमित्तत्वं | निर्निमित्तत्वं |
| ,, | २० | प्रत्ययस्य | प्रत्यस्य |
| ५७ | १० | विप्लवस्यैव | विप्लवोऽस्यैव |
| ,, | १५ | युक्त | साधवयुक्त |
| ५८ | ८ | भासाः. नाविष | भासा न विप |
| ,, | १४ | इति न तेषा | इति तेषा |
| ६० | ७ | ग्राह्यत्वाद्धि संवे | ग्राह्यत्वादबुद्धिसंवे |
| ६१ | ४ | स्वांशप्रत्य | स्वांशं प्रत्य |
| ,, | ११ | शक्यमेवं | शक्यमेव |
| ६४ | ५ | योक्त्वा | योक्ता |
| ६६ | ४ | अर्थेऽपि | अतोऽपि |
| ६७ | १२ | तच्चा | अतश्चा |
| ६९ | ४ | क्रमाकारं | साकारं |
| ,, | ७ | ज्ञानभेद | भेद |
| ,, | १० | यौगपद्येऽनेकस्य | यौगपद्येनानेकस्य |
| ७० | १ | स्यैक्यं | स्यैकं |
| ७४ | ३ | प्रमेयाभाव | प्रमेयभाव |
| ७६ | १० | साधकत्वात् स्व | साधकत्वास्व |
| ७८ | १९ | शब्दारू | शब्दरू |
| ८० | २ | कार्यत्वान्नु, | कार्यवत् । न |
| ८० | ४ | सामयिक | सांशयिक |

| Page | Line | Read | For |
|---|---|---|---|
| ८० | ७ | तर्हि ना | तद्विना |
| ८१ | ३ | द्यपेक्षया | द्यपेक्षा |
| ८१ | १५ | करण | कारण |
| ८४ | ४ | ततो भावात् | ततोऽभावात् |
| ८६ | १८ | रपि | र्नहि |
| ८७ | ७ | निश्चये | निश्चयेन |
| ८७ | ६ | अधिकरणभावाप | अधिकरणाप |
| ,, | १३ | स्वचित्स्व | सचित्स्व |
| ८६ | १ | वस्तुतो | धर्मादिवतो |
| ६० | ६ | यमेकमेव | यमेव |
| ६३ | १७ | सत्तादिना | सति आदिना |
| ६५ | ५ | विवेके पर | विवेकपर |
| ,, | १२ | अन्यश्चि | अन्यचि |
| ६८ | १६ | क्रिया रू | क्रियारू |
| १०१ | १७ | ताभ्यः शक्तिभ्यो भिन्न | ताभिः शक्तिभिर्भिन्न |
| ,, | १७ | पूर्वं सि | पूर्वासि |
| १०२ | ५ | तवापि | तथापि |
| १०४ | ६ | हितत्वे | हि तत्त्वे |
| १०५ | १ | त्यक्तु | युक्तं |
| १०६ | ८ | ज्ञत्वसर्वक | ज्ञत्वमनु क |
| ,, | १७ | प्रोक्तनयेन | प्रागपि |
| १०७ | २ | इत्यत्रान्तरे | इति । अत्रान्तरं |
| १०८ | ११ | विद्याकाल | विद्यानां काल |
| ११५ | १५ | तया सिद्धेः | तयाऽसिद्धेः |
| ११६ | ६ | मसद्धेतू | मसिद्धेतू |
| ,, | १० | वतः | वशतः |
| ,, | १ | ग्राहकात् | ग्राहकत्वात् |
| ११७ | ७ | तत्त्वभूतभा | तत्त्वभा |
| ११८ | ६ | निष्ठेरत | निष्ठैरत |
| ११६ | ७ | तेऽपि | ते वि |
| ,, | १५ | नास्तीति न | नास्तीति |
| १२० | ३ | शस्त्रौ | शास्त्रौ |
| १२१ | २० | त्वेनाभ्युप | त्वेनोप |
| १२२ | १५ | वस्तुभेदप्र | वस्तुभेदेप्र |
| ,, | २० | विषाणिवत् | विषाणवत् |

| Page | Line | Read | For |
|---|---|---|---|
| १२४ | १३ | धूमान्तरस्येव | धूमान्तरस्यैव |
| ,, | १७ | दूर | , न दूर |
| १२५ | ५ | स्यात्राप्र | स्यात्र प्र |
| ,, | २० | प्रयुज्यते | उपयुज्यते |
| १२६ | १६ | विजातीयता | विजातियता |
| १२७ | १० | नासिद्धता | वासिद्धता |
| १२८ | १७ | सिषाधयिषतां | सिषाधयिषता |
| १२९ | ३ | करण | कारण |
| ,, | १४ | देहान्तरे | देशान्तरे |
| १३० | ८ | निर्वृत्त्यर्थं | निवृत्त्यर्थं |
| १३३ | १९ | यथासिद्धेन विरुद्धश्चे | यदा सिद्धेन विरुद्धं चे |
| १३५ | १ | यद्वा नीतद्भाविनः सकृदपि तत्राभावादि | यद्द्वारा तद्भाविनः सकृदा ततोभावादि |
| ,, | ६ | एव तस्य | एतस्य |
| १३६ | ६ | विरोधः | विराधः |
| ,, | १८ | प्रतिहेतुतः | प्रोक्तहेतुतः |
| ,, | १९ | विरोधो | विरुद्धो |
| ,, | २० | स्वराद्धान्तेन | स्वराद्धान्ते न |
| १४४ | ६ | स्वभावत्वात् | स्वभावरूपत्वात् |
| १४६ | ६ | अतश्च | अतश्च |
| १५३ | २ | अमण | रमण |
| ,, | ३ | नुगृह्णाति | नुग्राहयति |
| १५९ | २० | न्न सा | नु सा |
| १६१ | १७ | त्वादात्मनः | त्वात्मनः |
| १६३ | १० | कार्यात्मकं कार्यं | कार्यं |
| ,, | १३ | बिम्बात्सा | बिम्बात्मा |
| १६४ | १६ | ज्ञानिना विना | ज्ञानबुद्धिना |
| १६८ | १३ | शरीरक | शरीराव |
| ,, | १९ | क्रियोज्झितं | क्रियोज्झितात् |
| १७३ | ८ | नित्यत्वापत्तिरेव | नित्यतानुपपत्तिरेव |
| १७८ | ८ | न सर्वत्र भ्रान्तता | न सभ्रान्तता |
| १८३ | १ | कषा | कचा |
| १८४ | ५ | संहारेण च | संहारेण |
| १८५ | ३ | इति आयुष्या ...... श्रुतयः | इति । आयुष्या...श्रुतयो |

| Page | Line | Read | For |
|---|---|---|---|
| १८६ | १६ | फलापे | फलोपे |
| १६३ | १० | वस्तुतो | वस्त्वर्थो |
| १६६ | १३ | प्रामाण्य | प्रमाण्य |
| १६८ | ४ | बहूनां | बहूना |
| ६६ | २ | निर्मितत्वे | तिर्मितत्वे |
| २०१ | ७ | कारणज | करणज |
| २११ | ५ | जन्मान्तरं तथापि | जन्मान्तरतयापि |
| २१७ | ५ | भावार्थप्रा | भावार्थाप्रा |
| २१६ | १२ | नर्थक्यात् | नर्थक्यात |
| २२० | १ | 'गुणिनो गुणाभि ... स्तुतिः' | गुणिनो 'गुणाभि . स्तुतिः' |
| ,, | १७ | 'अक्ताः शर्करा उपदधाति' | अर्थाः 'शर्करा उपदधाति' |
| २२० | १७ | केन अक्ता | के अर्था |
| २२१ | १४ | देवतानां | देवताना |
| २२७ | ६ | अज्ञानां | अज्ञाना |
| २२६ | २ | धानस्य तदिति | धानस्य धियो तदिति |
| ,, | ४ | जातेरेवा | जातेरिवा |
| २३५ | ६ | प्रतिपादयति | प्रपिपादयति |
| २३८ | | सकलो हि | स लोकेशो |
| २३६ | ० | मूर्तिस्त | अमूर्तिश्च त |
| २४२ | ६ | द्वारितया | द्वारिकया |
| २४३ | २ | शाब्दं | शाब्दं |
| २५१ | ६ | अभावात् | अभावत |
| २५ | २ | पुंसां | पुंसा |
| २५८ | ३ | मायातः | मयातः |
| २६६ | ४ | निरवयवात्म | नियवरवात्म |

